# रागमाला ।

Ragamala

## पुण्डरीकविठ्ठलविरचिता ।

प्रकाशक,

भालचंद्र सीताराम सुकथनकर, एम्. ए.

सन १९१४.

# रागमाला ।

## पुण्डरीकविठ्ठलविरचिता ।

नारायण गोविन्द् रातांजनकर इत्यभिधेन

तथा

गणपतराव गोपाळराव बर्वे इत्याव्हयेन

यथामति परिशोधिता ।

सा च

मुम्बय्याम्

भालचंद्रशर्मणा

निर्णयसागरमुद्रणयन्त्रालये रामचंद्र यशवंत शेडगेद्वारा

मुद्रयित्वा प्राकाश्यं नीता ।

शक १८३५ सन १९१४.

मूल्यं ४ आणकाः ।

श्रीपुंडरीकविट्ठलविरचित

# रागमाला.

कल्याणं बहुलं देशी वसंतं ललितं मुदे ।
नटनारायणं वंदे श्रीसारंगविभासकम् ॥
विठ्ठलेन समुद्धृत्य सारं ग्रंथार्थनिर्णयात् ।
श्रीमत्कपिलमुन्यर्थं क्रियते रागमालिका ॥
रागहेतुकनादस्य भेदानादौ वदाम्यहम् ।
मनो युंक्ते विवक्ष्वात्मा हन्ति वह्निं मनोऽनिलः ॥
प्रेरयत्यनिलं प्राणानिलश्चोर्ध्वक्रमाचरम् ।
नाभिहृद्गलशीर्षास्येष्वाविर्भावयति ध्वनिम् ॥
नादोऽतिसूक्ष्मसूक्ष्मश्च पुष्टोऽपुष्टश्च कृत्रिमः ।
पंचाख्या इति धत्तेऽसौ चतुर्धा व्यवहारतः ॥
व्यवहारे त्वसौ त्रेधा हृदि मंद्रोऽभिधीयते ।
कंठे मध्यो मूर्ध्नि तारो द्विगुणश्चोत्तरोत्तरः ॥
यंत्रे तु मंद्रस्थानं स्याद्-गायके तदशक्यतः ।
मंद्रादित्रितयं स्थानं व्यवहारेऽभिधीयते ॥
हेतवो नादभेदस्य तिर्यक् सच्छिद्रनाडिकाः ।
द्वाविंशतिः प्रतिस्थानं सोपानाकारवत्क्रमात् ॥
वायुपूरणतस्तारस्तत्तारस्तूत्तरोत्तरम् ।
प्रभवंत्युच्चोच्चतराः श्रुतयः श्राव्यमात्रतः ॥
रागादिव्यवहाराय तासु सप्त स्वराः स्थिताः ।
षड्जश्च ऋषभश्चैव गांधारो मध्यमस्तथा ॥
पंचमो धैवतश्चाथ निषादश्चेत्यनुक्रमात् ।
तेषां संज्ञाः सरिगमपधनीत्यपरा मताः ॥

वेदाचलांकश्रुतिषु त्रयोदश्यां श्रुतौ ततः ।
सप्तदश्यां च विंश्यां च द्वाविंश्यां च श्रुतौ क्रमात् ॥
षड्जादीनां स्थितिः प्रोक्ता प्रथमा भरतादिभिः ।
असपाः पूर्वपूर्वास्ते संचरंत्युत्तरोत्तरम् ॥
त्रिस्त्रिर्गतीस्ते प्रत्येकं याति गश्च चतुर्गतीः ।
यद्यद्रागोपयोगः स्यात्तत्तदिच्छागतिर्भवेत् ॥
तृतीये गन्योर्गती द्वितीये चांतरकाकलिनौ स्मृतौ ।
पंचम्यष्टादशी षष्ठी तथा चैकोनविंशतिः ॥
चतस्रः श्रुतयश्चैता रागाद्यैरप्रयोजकाः ।
शेषा अष्टादशैव स्युः श्रुतयः स्वरबोधकाः ॥
न्यूनाधिकैकगतिका मंद्रतारस्वरा यदि ।
न रागहानिकाः सर्वे स्पष्टता मध्यसप्तके ॥
चतुर्विधाः स्वरा वादी संवादी च विवाद्यपि ।
अनुवादी तु वादी तु प्रयोगे बहुलः स्वरः ॥
अंशः स्थायीतिपर्यायो रागोत्पादनहेतुकः ।
श्रुतयो द्वादशाष्टौ वा ययोरंतरगोचराः ॥
मिथःसंवादिनौ तौ स्तो गत्यादेश्च विभागतः ।
एकश्रुत्यंतरौ यौ कौ तौ मिथश्च विवादिनौ ॥
शेषाणामनुवादित्वं ज्ञेयमन्वर्थतः क्रमात् ।
क्वचिदंशः क्वचिन्न्यासः क्वचित्त्यागस्वरस्तथा ॥
तत्तद्रक्त्यानुसारेण रागेषु ग्रहतां गतः ।
गीतादिनियतमात्रः स्वरो ग्रह इतीरितः ॥
प्रयोगे बहुलोंऽशः स्यान्न्यासो गीतिसमाप्तिकृत् ।
विदारी वानपन्यासो विदारी छेदकृन्मुहुः ॥
सर्वत्र रागतस्त्वेते स्वरभेदा भवंति हि ।
षड्जः सर्वत्र रागेच ग्रहो हि निधपादयः ॥

वर्णमात्राः प्रयोज्या ये रक्त्याधिक्यान्न ते स्वराः ।
अशेषा मूर्छनाः प्रोक्ताः षड्जस्थाने मुनीश्वरैः ॥
षड्जस्थाने स्थितैर्न्याद्यै रजन्याद्या इति स्मृताः ।
हृतिः श्रुतिस्ततो लग्नजातोऽनुरणनध्वनिः ॥
भाविदीप्तः श्रोतृचित्तं स्वतो रंजयति स्वरः ।
स्वराणां निचयो ग्रामो मूर्छनादिसमाश्रितः ॥
भरतेनोदितौ शास्त्रे ग्रामौ द्वौ षड्जमध्यमौ ।
षड्जग्रामः पंचमे तु सप्तदश्यां श्रुतौ स्थिते ॥
स्वरेऽस्मिन् पंचमे किं तु षोडशीं श्रुतिमाश्रिते ।
तदैव मध्यमग्रामः सोऽत्र रागे न दृश्यते ॥
षड्जग्रामान् स्थितान्रागान् सर्वे गायंति गायकाः ।
तस्मान्मुख्यतमः षड्जग्राम एव न मध्यमः ॥
क्रमात्सप्तस्वरारोहावरोहा मूर्छना मता ।
ताः सप्त मध्यषड्जेन मूर्छनारभ्यतेऽग्रिमा ॥
अधस्तनैर्निषादाद्यैः षड्जस्थानस्थितैः क्रमात् ।
षडन्या मूर्छनाः सादींस्तदूर्ध्वं सारयेत्क्रमात् ॥
यस्यां यावतिथः षड्जस्तावतिथ्येव मूर्छना ।
आद्या चोत्तरमंद्रा च रजनी चोत्तरायता ॥
शुद्धषड्जा मत्सरीकृताश्वक्रांताभिरुद्गता ।
नामान्येतानि मुनिभिर्मूर्छनानां यथाक्रमम् ॥
गीतोपयोगतस्तास्तु षाडवौडुवीतिकृताः ।
षट्स्वरैः षाडवाः प्रोक्तास्त्वौडुवाः पञ्चभिः स्वरैः ॥
शुद्धताना इति ख्याताः पूर्णास्तानक्रियात्मकाः ।
प्रवेशनिग्रहाभ्यां च द्विधा तानक्रिया भवेत् ॥
प्रवेशः परसादृश्यमीषत्स्पर्शस्तु निग्रहः ।
व्युत्क्रमात्कूटतानाः स्युः पूर्णापूर्णाः पुरोदिताः ॥

इति नादस्थानश्रुतिस्वरमूर्छनातानाः ।

कंचित्क्रमं विलिख्यादौ पूर्वपूर्वः परादधः ।
स्वरः स्थाप्यः स चेदग्रे तत्तत्पूर्वस्वरो भवेत् ॥
प्रस्तारो वामतः कार्यः पुरस्तूपरिवर्तिनः ।
मूलक्रमक्रमात्पृष्ठे शिष्टान् प्रस्तार ईदृशः ॥
क्रमात्पूर्वस्वरस्थाङ्कसङ्ख्यांत्यादिस्वरावलिम् ।
अंत्यादधोधो विलिखेत्कृतं त्यक्त्वा क्रमो भवेत् ॥
यदैकस्वरतश्चांत्योपांत्यधारा ततोऽन्यथा ।
मालाप्रस्तारक इति विठ्ठलेन प्रकीर्तितः ॥

इति प्रस्तारः ।

अंकानेकांकमारभ्य सप्तांस्तान्विलिखेत्क्रमात् ।
ऊर्ध्वमूर्ध्वं विहन्यात्तु पूर्वेणांकं परंपरम् ॥
एकस्वरादितानानां संख्येवं ज्ञायते स्फुटम् ।

इति संख्या ।

मूर्छनांत्यस्वरस्थांकाः प्रश्नांकैः पातयेत्तु तान् ॥
शेषान्प्राक्प्राक्स्वरस्थांकैर्यथाहननसम्भवैः ।
क्रमेण पातयेद्येनाहतिस्तावतिथः स्वरः ॥
हतेरभावतः किं तु कोपि पूर्वस्थितः स्वरः ।
स्याद्वितीयाद्वणनं नष्टसिद्धिर्भवेत्तदा ॥

इति नष्टम् ।

नष्टबोधगता येंकास्तानन्त्याङ्केषु पातयेत् ।
शिष्ट उद्दिष्टसिद्धिः स्यादित्यभाषत विठ्ठलः ॥

इत्युद्दिष्टम् ।

गानक्रियोच्यते वर्णः स चतुर्धा निरूपितः ।
स्थाय्यारोह्यवरोही च संचारीत्यथ लक्षणम् ॥
स्थित्वा स्थित्वा प्रयोगः स्यादेकस्यैव स्वरस्य यः ।
रागादिव्यवहारेषु स्थायी वर्णः स उच्यते ॥
आरोहन्ति स्वरा यत्र चारोही स प्रकीर्तितः ।
यत्र चैवावरोहन्ति सोवरोहीति गण्यते ॥

एतेषां मिश्रणाद्वर्णः संचारी परिकीर्तितः ।
इति वर्णाः ।
विशिष्टवर्णसंदर्भमलंकारं प्रचक्षते ॥
तस्य भेदा बहुतरास्तत्र स्थायीगतान्ब्रुवे ।
एषामाद्यंतयोरेकाः स्वरास्ते स्थायिनि स्थिताः ॥
मंद्रादिश्चाथ मंद्रांतो मंद्राद्यंताद्वयस्ततः ।
मंद्रमध्याभिधः पश्चात्पंचमः क्रमरेचितः ॥
स्थायिवर्णगताः पंचालंकाराः परिकीर्तिताः ।
विस्तीर्णः सन्निकर्षश्च प्रेंखः प्रच्छादनस्ततः ॥
आक्षिप्तबिंदुहसिताः सप्त चारोहिणि स्थिताः ।
प्रसादः प्राङ्मुखोत्क्षेपौ परिवर्तोद्वाहितौ ततः ॥
निःकूजितो रेचितश्च स्खलितः क्रमरंजितौ ।
ह्लादमानश्च हुंकारः श्येनः संचारिवर्णगाः ॥
त्रयोदश क्रमादेषामथ लक्षणमुच्यते ।
मंद्रप्रकरणेऽत्र स्यात् मूर्छना प्रथमः स्वरः ॥
स एव द्विगुणस्तारः पंचमो मध्य उच्यते ।
लिपौ मंद्रो बिंदुशिरास्तारो रेखाशिरा भवेत् ॥
मंद्रमध्यात्परे तारे मंद्रादिः कथितो यथा संपर्स ।
तद्वैलोम्ये तु मंद्रान्तः । र्सपसं । मंद्रयोर्मध्यगे पुनः ॥
तारे च मंद्राद्यंतः स्यात् । संर्ससं । तारयोर्मध्यगे पुनः ।
मंद्रे च मध्यमध्याख्यमलंकारविदो विदुः ॥ र्ससंर्स ॥
आद्यन्ते मूर्छनादिश्चेत् स्वरो मध्ये द्वितीयकः ।
सैका कलाऽथ चेन्मध्ये तृतीये च चतुर्थके ॥
सा द्वितीयापंचमाद्यास्त्रयोंतश्चेत्कलापरा ।
एवं कलात्रयेणोक्तोऽलंकारः क्रमरेचितः ॥
संरिसं । संमगसं । संपधनिसं ॥
इति स्थायिगतालंकाराः ॥

मूर्छनादेः स्वराद्यत्र क्रमेणारोहणं भवेत् ।
स्थित्वा स्थित्वा स्वरैर्दीर्घैः स विस्तीर्णोऽभिधीयते ॥

सारीगामापाधानी ॥

ह्रस्वैः स्वरैः सन्निकर्षो द्विर्द्विरुक्तैर्निरंतरैः ।

सस रिरि गग मम पप धध निनि

स्वरद्वयं समुच्चार्य पूर्वपूर्वयुतं परम् ॥

यदांदोलितमारोहे प्रेंखाख्यः कथितो यथा ।

सरी रिगा गमा मपा पधा धनी निसा

त्रिस्वराद्या कलांते च पूर्वपूर्वा यदादिमा ॥

कला च त्रिस्वरे यत्र तदा प्रच्छादनाभिधः ।

सरिगा गमपा पधनि ॥

एकांतरं स्वरयुगं तादृक्पूर्वयुतं परम् ॥

क्रमादारोहति यदा तदाऽऽक्षिप्तः प्रचक्ष्यते ।

सग गप पनि ॥

पूर्वस्वरं त्रिरुच्चार्य सकृत्तत्परकं स्वरम् ॥

एवं क्रमं क्रमात् कुर्वन्नारोहे बिंदुसंज्ञकः ।

सससरि रिरिरिग गगगम मममप पपपध धधधनि निनिनिर्स

यत्रैकोत्तरवृद्धाभिरावृत्तिभिरुदीरिताः ॥

आरुह्यंते स्वराः प्राह हसितं तं मुनीश्वराः ।

सा रिरी गगगा ममममा पपपपपा धधधधधधा निनिनिनिनिनिनी

आरोहणे क्रमादेते सप्त चाप्यवरोहिणि ॥ इति आरोह्यवरोह्यलंकाराः ॥

पूर्वपूर्वः परस्योर्ध्वाधस्ताच्च क्रियते स्वरः ।
यदा तदा च प्रसादं तमाह श्रीरतो मुनिः ॥

सरिस रिगरि गमग मपम पधप धनिध निसनि

कला गता गतवती द्विस्वरैकैकहानतः ।
यत्रान्यास्तादृशः स स्यात्प्राङ्मुखः परिकीर्तितः ॥

सरिरिस रिगगरि गममग मपपम पधधप धनिनिध निससनि

त्रिस्वराश्चेत्कला पूर्वपूर्वत्यागोर्ध्वसंक्रमैः ।
यदातदोत्क्षेपकाख्यः प्रसिद्धो गानवेदिनाम् ॥

सरिग रिगम गमप मपध पधनि धनिस

स्वरं द्वितीयमुज्झित्वा त्रिस्वराद्या कला यदि ।
त्यक्तादारभ्य तादृश्योऽन्यास्तदा परिवर्तकः ॥

सगम रिमप गपध मधनि

कलायां त्रिस्वरान्गीत्वावरुह्यैकं पराः कलाः ।
यत्रैकैकोज्झिता गीता तद्वदुद्वाहितस्तु सः ॥

सरिगरि रिगमग गमपम मपधप पधनिध धनिसनि

प्रसादस्य कलां गीत्वा तत्कलायास्तृतीयकं ।
गत्वाद्यगानाद्भवति निःकूजितकनामकः ॥

सरिसगस रिगरिमरि गमगपग मपमधम पधपनिप

आद्यस्वरं द्वितीयं च तृतीयं च द्वितीयकं ।
पुनः क्रमात्स्वरांस्त्रींश्च गीत्वा चैककला यदि ॥

एवं कलाषट्कं च गत्वाऽसौ रेचितः स्मृतः ।

सरिगरिसरिगा रिगमगरिगम गमपमगमप मपधपमपध पधनिधपधनि धनिसनिधनिसा

कलां प्रयुज्य मंद्रादोर्द्विरुक्तोर्ध्वस्वरान्विताम् ॥

अवरुह्येत चेदेष स्खलिताख्यस्तदा भवेत् ।

सरीगममरीगसा रिगमपपगमरी गमपधधमपग मपधनिनिपधम पधनिसासाधनिप.

यत्रासौ क्रम इत्युक्तः कलाद्वित्रिचतुःस्वराः ॥

आद्यस्वराद्यास्तिस्रः स्युर्द्वितीयाद्यादयस्तथा ।

सरिसरिगसरिगम रिगरिगमरिगमप गमगमपगमपध मपमपधमपधनि पधपधनिपधनिसा

द्विरुक्ता यदि मन्द्रान्ता मन्द्रादेः स्युः कलास्तथा ॥

रंजिताख्यो भवेदेष प्रसिद्धो गानवेदिनाम् ।

सगरिसगरिसा रिमगरिमगरी गपमगपमगा मधपपधपमा पनिधपनिधपा.

ह्लादमाने तु मन्द्रान्ता मन्द्रादेस्तु कला मताः ॥

सगरिस रिमगरि गपमग मधपम पनिधप.

आदिमेन कला यत्र द्विस्वराद्या गतागतैः ।

स्वरैरेकोत्तरैर्वृद्धैः स हुंकारो निगद्यते ॥

सरिरिसा सरिगगरिसा सरिगममगरिसा सरिगमपपमगरिसा सरिगमपधधपमगरिसा सरिगमपधनिनिधपमगरिसा.

क्रमात्सरिगमाद्यैः स्याच्छ्येनः संवादियुग्मकैः ।

सप रिध गनि मसा.

एते संचार्यलंकारा आरोहेण प्रदर्शिताः ॥

एतानेवावरोहेण प्राह श्रीभरतो मुनिः ।

इति संचार्यलंकाराः ॥

इति प्रसिद्धालंकाराः पंचविंशत्युदीरिताः ॥

अनंतत्वात्तु ते शास्त्रे न सामस्त्येन कीर्तिताः ।

रक्तिलाभस्वरज्ञानं वर्णगानां विचित्रता ॥

इति प्रयोजनान्याहुरलंकारनिरूपणे ।

इत्यलंकाराः ।

गमकः स्वरकंपः स्यात् श्रोतृहृदयरंजकः ॥
तस्य भेदास्तु तिरिपः स्फुरितः कंपितस्तथा ।
लीनआंदोलितवलित्रिभिन्नकुरुलाहृतः ॥
उल्लासितः प्लावितश्च मुद्रितो हुंफितस्ततः ।
नामितो मिश्रितः पंचदश इत्यथ लक्षणम् ॥
लघ्विष्टडमरुध्वानकंपानुकृतिसुंदरः ।
द्रुततुर्यांशवेगेन तिरिपः परिकीर्तितः ॥
स्फुरितो द्रुततृतीयांशात् द्रुतार्धात्कंपितं विदुः ।
द्रुतवेगेन लीनः स्यात् आंदोलो लघुवेगतः ॥
वलिर्वेगाधिकत्वेन त्रिभिन्नस्तु स उच्यते ।
त्रिस्थानेषु सवैचित्र्यमविश्रांतघनस्वरः ॥
कुरुलोवलिरेव स्यात्कण्ठे कोमलग्रंथिलः ।
स्वरमग्रिममाहत्य निवृत्तस्त्वाहतो भवेत् ॥
उल्लासितः क्रमाद्गच्छन् प्लावितः प्लुतमानतः ।
हृदयंगमहुंकारो गंभीरो हुंफितो भवेत् ॥
मुद्रितो मुखमुद्रेण नामितो नामनाद्भवेत् ।
कतिचिन्मिश्रणान्मिश्रो बहुधाप्यूह्यतां बुधैः ॥

इति गमकाः ।

रागस्यावयवः स्थाय्यो वागो गमक उच्यते ।
मयोक्तो गमकः पूर्वं त्वधुना स्थाय्य उच्यते ॥
भजनः स्थायनगतिः शब्दढालौ च वाहिनी ।
छायावेतिक्रमात्तेषां लक्षणं प्रतिपाद्यते ॥
रागस्यातिशयाधानाद्भजनः परिकीर्तितः।
मुक्तशब्दपरिग्राह्यः शब्दो माधुर्यपुष्टतः ॥

चतुर्भेदो भवेच्छब्दः खाह्लो नारहाटकः ।
बोंबको मिश्रकश्चेति कफजः खाह्लो मतः ॥
असौ सुस्निग्धमधुरप्रौढतासौकुमार्ययुक् ।
पित्तजो नारहाटः स्याद्रुक्षगंभीरयुग्ध्वनिः ॥
वातजो बोंबकः स्यात्तु स्थूले निःसारतायुतः ।
एतत्संमिश्रणादुक्तो मिश्रकः सन्निपातकः ॥
निःसाररुक्षताहीन उत्तमः परिकीर्तितः ।
खाह्लो बोंबयुक्तश्चेन्मध्यमः कथितो बुधैः ॥
बोंबनारहाटयुक्तः शब्दानामधमः स्मृतः ।
विलुंठनात्मको मुक्ताफलवद्गाल उच्यते ॥
आरोहादित्रये निष्ठं कंपनं वाहिनी भवेत् ।
छायाकाकुः षट्प्रकाराः स्वररागान्यरागजाः ॥
स्याद्देशक्षेत्रयंत्राणां तल्लक्षणमथोच्यते ।
श्रुतिन्यूनाधिकत्वेन या स्वराश्रयसंश्रयात् ॥
स्वरांतरस्य रागे स्यात्स्वरकाकुरसौ मतः ।
या रागस्य निजच्छाया रागकाकुं तु तां विदुः ॥
सा त्वन्यरागकाकुर्या रागे रागांतराश्रयात् ।
सा देशकाकुर्या रागे भवेद्देशस्वरभावतः ॥
शरीरं क्षेत्रमित्युक्तं प्रतिक्षेत्रनिसर्गतः ।
रागे नानाविधा काकुः क्षेत्रकाकुरिति स्मृता ॥
वीणावंशादिकोत्थासौ यंत्रकाकुः सतां मता ।

इति स्थाय्यः ।

वर्णालंकारसंपन्ना गमकस्थाय्यचित्रिता ॥
आलप्तिरुच्यते तज्ज्ञैर्बहुवैचित्र्यसंयुता ।
ग्रहांशतारमन्द्राणां न्यासापन्यासयोस्तथा ॥
अल्पत्वस्य बहुत्वस्य षाडवौडुवयोरपि ।
अभिव्यक्तिर्यत्र दृष्टा स रागालाप उच्यते ॥

आलप्त्यालापयोस्सम्यक् प्रकटीकरणं च यत् ।
रागालापनमित्युक्तं लक्ष्यलक्षणकोविदैः ॥
आलप्तिर्द्विविधा प्रोक्ता रागवस्तुविशेषणात् ।
स्वस्थानकैश्चतुर्भिर्या क्रियते रूपकं विना ॥
रागालप्तिर्यत्र रागः स्वरैः संवेश्यते च सः ।
स्थायी ततश्चतुर्थस्तु द्व्यर्ध इत्यभिधीयते ॥
स्थायिस्वरादष्टमस्तु द्विगुणः परिकीर्तितः ।
द्व्यर्धद्विगुणयोर्मध्ये स्थिता अर्धस्वराभिधाः ॥
स्थायिनोद्व्यर्धतोऽर्वाक्च स्वरसंचालनं तथा ।
स्थायिनोऽधस्तनं चापि वादनात्प्रथमं भवेत् ॥
द्व्यर्धस्वरे चालयित्वा न्यसनं तु द्वितीयकम् ।
अर्धस्वरे चालयित्वा तदेव तु तृतीयकम् ॥
द्विगुणं चालयित्वा तु स्थायिन्यासाच्चतुर्थकम् ।
एभिश्चतुर्भिः स्वस्थानै रागालप्तिर्मता सताम् ॥
आलाप एव ठायः स्यात् पृथग्भूतविदारिकः ।
रूपकस्थेन रागेण तालेन च विधीयते ॥
रूपकालप्तिरेषा तु द्विविधा परिकीर्तिता ।
प्रतिग्रहणिकाद्या च भंजनी संज्ञिकापरा ॥
विधाय स्थायमालप्ती रूपकावयवो यदि ।
प्रतिगृह्येत सा प्रोक्ता प्रतिग्रहणिका बुधैः ॥
भजनी द्विविधा ज्ञेया स्थाय्यरूपकभंजनात् ।
यदा तत्पदमानेन स्थाय्यो रूपकसंस्थितः ॥
नानाप्रकारः क्रियते सा ज्ञेया स्थाय्यभंजनी ।
तैः पदैस्तेन मानेन समग्रं रूपकं यदि ॥
अन्यथावान्यथा गायेदसौ रूपकभंजनी ।
इममेवोच्यते लोके नेमशब्देन गायकैः ॥

इत्यालप्तिभेदाः ।

स्तोकैः स्तोकैस्तनुस्थायैः प्रसन्नैर्बहुभंगिभिः ।
जीवस्वरव्याप्तिमुख्यै रागस्य स्थापना भवेत् ॥

इति स्थापना ।

योऽसौ ध्वनिविशेषस्तु स्वरवर्णविभूषितः ।
रंजको जनचित्तानां स रागः कथितो बुधैः ॥
स्वराणां क्रमभेदाच्च नानागमकभेदतः ।
षाडवौडवभेदाच्च संपूर्णा इति भेदतः ॥
ग्रहांशन्यासभेदाच्च नानादेशजनोद्भवाः ।
अनंता रागभेदाः स्यू रूढिदेशस्वराभिधाः ॥
शुद्धसालगसंकीर्णा इति रागास्त्रिधा पुनः ।
नान्योपजीविनः शुद्धाः केवला रंजनात्मकाः ॥
छायांतरेण रक्ता ये रागाः सालगसंज्ञकाः ।
मूलछायांतराद्रक्ता रागाः संकीर्णका इति ॥
अनन्तत्वात्तु रागाणां प्रत्येकं वक्तुमक्षमः ।
केषांचिन्मतमाश्रित्य कति रागान्वदाम्यहम् ॥
शुद्धभैरवहिंदोलौ देशिकारस्ततः परम् ।
श्रीरागः शुद्धनाटश्च नट्टनारायणश्च षट् ॥
रागा एवं मयाख्यातास्तद्धेतुः कथ्यतेऽधुना ।
सद्यो जातोद्भवः शुद्धभैरवो वामदेवतः ॥
हिंदोलो देशिकाराख्यस्त्वनघात्तत्पुरुषतः ।
श्रीरागः शुद्धनाटाख्योपीशानवदनोद्भवः ॥
नटनारायणो रागो गिरिजामुखजस्ततः ।
एतेषां वनिताः पुत्राः पंच पंच क्रमात् ब्रुवे ॥
धन्नासी भैरवी चैव सैंधवी मारवी तथा ।
आसावरीति पंचैताः शुद्धभैरवसुभ्रुवः ॥
भैरवः शुद्धललितः पंचमः परजस्तथा ।
बंगालश्चेति पंचैते शुद्धभैरवसूनवः ॥

भूपाली च वराटी च तोडी प्रथममंजरी ।
तुरुष्कतोडिका चेति हिंदोलस्य हि नारिकाः ॥
वसंतः शुद्धबंगालः श्यामः सामन्तकस्तथा ।
कामोदश्चेति पंचैते हिंदोलस्य सुता अमी ॥
रामक्री बहुली देशी जयतः श्रीश्च गुर्जरी ।
देशिकारस्य पंचैता विख्याताश्च वरांगनाः ॥
ललितश्च विभासश्च सारंगस्त्रिवणस्तथा ।
कल्याण इति पंचैते देशिकारस्य सूनवः ॥
गौडी पाडी गुणकरी नादरामक्रिया तथा ।
गुंडक्रीति च पंचैताः श्रीरागेहिसमाश्रिताः ॥
ढक्कश्च देवगांधारो मालवः शुद्धगौडकः ।
कर्नाटबंगाल इति श्रीरागस्य तनूद्भवाः ॥
मालवः श्रीश्च देशाक्षी देवक्री मधुमाधवी ।
आहेरी चेति विख्याताः शुद्धनाटवरस्त्रियः ॥
जिजावंतश्च सालंगो नाटः कर्नाटकस्ततः ।
छायानाटो हमीरादिर्नाटो नाटस्य सूनवः ॥
बेलावली च कांबोजी सावेरी सुहवी तथा ।
सौराष्ट्री चेति पंचैता नटनारायणस्त्रियः ॥
मल्हारगौंडकेदाराः शंकराभरणस्ततः ।
बिहागडश्चेति सुता नटनारायणस्य च ॥
अथैषां लक्षणं वक्ष्ये मूर्त्याभरणपूर्वकम् ।
चंद्रनेत्रान्विकां संज्ञां ज्ञायतां लोकतः सुधीः ॥

सद्योजातोद्भवोऽयं [illegible]मगतिगनिः सत्रिको[illegible]रिः कपर्दी
रक्तः श्यामस्त्रिशूली सिततरवसनो भस्मदेहस्त्रिनेत्रः ।
कंठे शृंगं दधानः श्रवणयुगलतो मुद्रिके चंद्रजूटो
हैमन्तेपि प्रभाते विलसति वृषपो भैरवः शुद्धपूर्वः ॥

इति शुद्धभैरवः ।

सर्वांगे भूषणाढ्या धनिरिगविधुगा सत्रिकास्तारिधाभ्याम्
दूर्वाश्यामा विचित्रांबररचिततनुर्दाडिमीपुष्पहस्ता ।
नेत्रान्तर्बाष्पयुक्ता धवलसहचरी पूर्वजेराकनाम्नः
पश्यन्ती गीतवर्त्मोषसि बहुधनदा धन्यधन्नासिका सा ॥

इति धन्नासी ।

धन्नासीमेलजाता स्वरसकलयुता चादिमध्यान्तषड्जा
तन्वंगी चंद्रवक्त्रा कनकसमतनुः श्वेतवस्त्रं दधाना ।
भाले सिन्दूरबिन्दुर्विकसितवदना सर्वशृंगारकाढ्या
नृत्यन्ती गीयमाना द्रविडजनरता भैरवी सा प्रभाते ॥

इति भैरवी ।

भैरव्या मेलजाता स्वरसकलरता सत्रिका चंद्रवक्त्रा
तन्वंगी पद्मनेत्रा विपुलसुजघना मत्तमातंगयानी ।
मंदंमंदं वदंती बहुविधगमकैः सैंधवी रक्तवस्त्रा
युद्धे योधेश्वराणां विमलतरयशः प्रार्थयंती सदा सा ॥

इति सैंधवी ।

चंद्रास्या दीर्घकेशी त्वनलगतिनिगा सत्रिकास्तारिधाभ्याम्
हेमाभा दीर्घरूपा बहुविधकुसुमैर्भूषिता स्निग्धनेत्रा ।
मेवाडस्याग्रजाता मृगशिशुनयनी रक्तवस्त्रं दधाना
चेषद्धास्या स्तुवंती युधि नृपतिगणान् मारवी सा सदैव ॥

इति मारवी ।

गांधारोत्राग्निगः स्यात्प्रथमगतिगनिर्मादिमध्यांतपूर्णा
तन्वंगी श्यामवर्णा करधृतमुकुला सर्वशृंगारयुक्ता ।
रंभायाः काननेषु प्रियविमलयशोऽध्यापयंती सुकेशी
गंधर्वैः स्तूयमाना प्रियरसकरुणा शश्वदासावरी सा ॥

इति आसावरी ।

भस्मांगः कण्ठशृंगी श्रवणयुगलतः शंखमुद्रे दधानः
पादत्राणे प्रवाले फणिपतिसुजटाबद्धमौलिः प्रमत्तः ।

उज्झालस्यानुयायी पटुतरवचनः किन्नरीवाद्यमानः
पूर्णो धाद्यंतमध्यस्त्वनलविधुगनिर्भैरवः पूर्वयामे ॥

इति भैरवः ।

सांशाद्यंतः प्रवीणः शुचितरललितो मारवीमेलजातो
भाले धत्ते स बिंदुं कनकसमनिभं शुभ्रवस्त्रं दधानः ।
गोरांगश्चंपमैत्री कुसुमभरशिराः पंकजाक्षो विलासी
कामी तांबूलहस्तः प्रतिदिनमुषसि प्रार्थकः खंडितानाम् ॥

इति शुद्धललितः ।

श्यामं तांबूलहस्तं करधृतकुसुदं मारवीमेलजातं
पत्रि त्रारिं सुरेशं पिकमृदुवचनं वेणुकं पीतवस्त्रम् ।
लिप्तांगं यक्षपंकैः शिरसि सुमुकुटं बालचंद्रार्कभालम्
गायंतीहत्र नाके सकलसुरवराः पंचमं सुप्रभाते ॥

इति पंचमः ।

सत्रिः संपूर्णकोसौ द्विविधुगतिगनिस्तालहस्तः सुभार्यः
पृष्ठे पैनाकपाणिर्बहुविधरचितैर्भूषणैः शोभमानः ।
गौरो दीर्घस्वरूपी मृदुवचनपरः सर्वलोकोपकारी
नित्यं याच्यः सदाहर्निशि च स परजो भाति चाग्रे नृपाणाम् ॥

इति परजः ।

अंत्यो गश्च स्वरौ स्तस्त्रिनयनगतिगौ सत्रिकाढ्यश्च पूर्णो
वामे पाणौ सुमालां शशधरमणिभां शुभ्रवस्त्रं दधानः ।
बंगालः पानपात्रं विशदकनकजं सव्यहस्ताग्रभागे
विद्वान्संगीतवेदं पठति च नितरां गद्गदैः कंपभेदैः ॥

इति बंगालः । इति भैरवपरिवारः ।

अस्मिन्रागे भवेतां प्रथमगतिगनी सत्रिको त्रारिपोऽसौ
गौरांगः पीतवासा घनकुसुमवने क्रीडको दोलयाने ।
हिंदोलः स्त्रीसहायः कटकमुकुटमुक्तामहाकुंडलाढ्यः
प्रातःकाले वसंते विचरति चतुरो वामदेवाभिजातः ॥

इति हिंदोलः ।

जातो मल्हारमेले निगरति रहिता मादिमध्यांतरूपा
नासाग्रे स्वर्णपुष्पं कमलनयनयोः कज्जलं कंठमालाम् ।
मौक्तियं भालमध्ये वरतलतिलकं कंकणे हस्तमूले
रक्तं वस्त्रं दधाना त्वनवरतमदा याति भूपालिका सा ॥

इति भूपाली ।

स्वागारे स्वेच्छया या मृदुतरवचनैः क्रीडितावालिपुंजै-
श्चित्रं वस्त्रं दधाना कुसुमसुकबरी चामरैर्वीज्यमाना ।
नानाशृंगारयुक्ता मदनसहचरी कोमलांगी सुगौरी
सायंपूर्णा त्रिषड्जा ह्यनलगतिगती राजते सा वराली ॥

इति वराली ।

सव्ये हस्ते सुदंडी त्वपरकरतले तालयुग्मं दधाना
लिप्तांगा चंदनाद्यैः सुशवरवसना सर्वभूषाभियुक्ता ।
प्रौढा तांबूलवक्त्रा विकसितनयना मोहिनी मुक्तचूर्णा
पूर्णामाद्यंतमध्या प्रथमगतिगनिस्तोडिका प्रातरेव ॥

इति तोडिका ।

जाता गौडस्य मेले धरिपरिरहिता वादिमध्यांतपाया
गौरांगी पीतवस्त्रा मृगमदतिलकं भालमध्ये दधाना ।
हस्ते वीणैकवाद्या सरसमधुरवाक्मुक्तकेशी कुरंजी
प्रीतालंकारयुक्ता प्रथमपदधुरा मंजरी सा सदैव ॥

इति प्रथममंजरी ।

छायानाटस्य मेले प्रकटितसुतनुर्मादिमध्यांतपूर्णा
गौरांगी मूर्ध्नि वेणीं कनकमणिमयं कर्णपुष्पं दधाना ।
प्रौढेषद्रक्तनेत्रा यवनसुवनितावस्त्रवेशाधिकाढ्या
द्राक्षां पीत्वा प्रभाते विलसति चतुरा यावनी तोडिका सा ॥

इति तोडी ।

जातो हिंदोलमेले स्वरसकलयुतः सत्रिकश्च प्रभाते
त्वारामे क्रीडमानो नवदलकुसुमामोदलुब्धालिवृंदः ।

तांबूलास्योतिगौरो रतिपतिसदृशो रक्तवस्त्रश्च सार्धं
योषिद्भिः सर्ववाद्यारवरभसमहद्धास्ययुक्तो वसंतः ॥

इति वसंतः ।

जातः कर्णाटमेले स्वरसकलरतः सत्रिकः पूर्णकायः
शुभ्रांगः पीतवासा मणिगणरचिते कुंडले कर्णयोः स्तः ।
आस्ते मौलौ किरीटं करतलकमलः कुंकुमालिप्तदेहः
प्रातर्याच्यः प्रमत्तो युवजनसहितः शुद्धबंगालकोऽसौ ॥

इति शुद्धबंगालः ।

काकल्या चांतरेण प्रकटवरतनुः सत्रिकः पूर्णरूपः
श्यामांगः पीतवासा मधुरतररवः कंपभेदैर्विचित्रैः ।
कंठे रत्नैकमालो विरचिततिलकः कुंकुमैर्भालमध्ये
रागः श्यामाभिधानस्त्वनवरतनदः कामिनीनां विनोदे ॥

इति श्यामः ।

कर्णाटाख्यस्य मेले प्रकटवरतनुः पूर्णरूपस्त्रिषड्जः
पद्मांघ्रिः पद्मनेत्रः श्रवणयुगलतः कुंडले द्वे दधानः ।
बिभ्रन्मौलौ किरीटं बहुकुसुममयं कंठमाली सुवस्त्रं
प्रातःकाले चकास्ति प्रबलगमकवान् प्रौढसामंतरागः ॥

इति सामंतरागः ।

कामोदः कामरूपी धृतमुकुटकरः श्वेतवस्त्रं दधानः
कस्तूरीबिंदुभालः कुसुमसुमुकुटः कंठमालादिकाढ्यः ।
वक्ता स व्यंग्यवाक्यं युवजनसहितो वेत्रहस्तः प्रतापी
संपूर्णः सत्रिकोऽसौ विधुगतिगनिकश्चापराह्णे चकास्ति ॥

इति कामोदः । इति हिंदोलपरिवारः

जातो घोराख्यवक्त्रात् त्रिगतिगनिगमाः सत्रिपूर्णोत्र रागे
रक्तांगः पद्मनेत्रः सितगजगमनो बाखरोजस्य मित्रम् ।
कंठे मुक्तैकमालो धृतमुकुटशिराश्चित्रवासाः सखड्गो
मध्याह्ने योधसंघे सुललितशिशिरे देशिकारश्चकास्ति ॥

इति देशिकारः ।

पूर्णेन्द्वास्या सुमुक्तामणितरलगला नीलवस्त्रं दधाना
कूर्पासं रक्तवर्णं करचरणयुगे कंकणे नूपुरौ च ।
रामक्री चंचलाक्षी विमलतरगिरं चारटन्ती विदग्धा
शृंगाराढ्या त्रिषड्जा त्वनलगतिगनी राजते सर्वदैव ॥

इति रामक्री ।

रामक्रीमेलदृष्टा निगपरिरहिता वापि माद्यंतमध्या
तन्वंगी श्यामवर्णा विलुठितकबरी सव्यहस्ते सुदंडी ।
तांबूलास्या प्रगल्भामरहटवनिता वस्त्रभूषाधिकाढ्या
नासायां पीनमुक्ता बहुमतिबहुली शोभते पूर्वयामे ॥

इति बहुली ।

धंम्मिद्रे मद्रिसालां श्रवणयुगलतः कुंडले कंठमालां
कूर्पासं शुभ्रवस्त्रं चरणकरयुगे नूपुरौ कंकणे च ।
आहंगस्य प्रपौत्री मृदुसुकरतले पल्लवं संदधाना
गांधारांत्यंदुगौस्तस्त्रिसमयरिरपा सर्वदा याति देशी ॥

इति देशी ।

नासाग्रे श्रीलवङ्गं जलजकुटिलकेशी कुण्डले श्रोत्रयोर्द्वे
चोलिं कौसुंभवस्त्रं शिशुविधुतिलकं चांजनं नेत्रयोश्च ।
हस्तद्वन्द्वे सुकाचप्रवलयनिचयं मूर्ध्नि वेणीं दधाना
देशीमेले रुचिज्ञा च सकलजयतश्रीस्त्रिसा चापराह्णे ॥

॥ इति जयतश्रीः ॥

संधत्ते हस्तमूले करिरदवलयान्यंघ्रिमंजीरयुग्मं
नासाग्रे हेमपुष्पं कनकसमनिभं कंचुकीं रक्तवस्त्रम् ।
बिम्बोष्ठी रक्तवर्णा दिवसुररचिता मुक्तकच्छप्यसा वा
रामक्रीमेलसौख्यात्रिसमयरिरसौ गुर्जरीयं प्रभाते ॥

॥ इति गुर्जरी ॥

देशी मेले प्रजातः स्वरसकलयुतो धत्रिकश्चंचलाक्षो
हस्ते पद्मं दधानः शुचिवसनरतः श्लिष्टशृंगारसर्वः ।

मुग्धस्त्रीश्यामलाक्षो हसति सकपटं पूर्णताम्बूलवक्त्रः
कामी कामावतारः कुटिलसुललितो भाति धृष्टः प्रभाते ॥
इति ललितः ।

गौरांगः पंकजाक्षः सुशबरवसनो भालकाश्मीरबिन्दु-
मत्रीस्रग्भूष्यकण्ठश्चतुरवरगिरं कीरमध्यापयन्यः ।
मेले तातस्य जातस्त्वधिकप्रथमभः सत्रिकोऽपः शठोऽसौ
स्वेच्छागामी प्रभाते वदति च दयितां श्रीबिभासाख्यरागः ॥
इति बिभासः ।

श्यामांगः पीतवासाः प्रबलतरगदाशंखचक्राब्जहस्तो
बाणैः शार्ङ्गेण पूर्णस्फुरदिषुधिकटिस्तार्क्ष्यगो भूषणाढ्यः ।
गांधारो वेदगः स्युर्गुणगतिमनिधाः पक्षगो यस्त्रिषड्जः
संपूर्णश्चापराह्णे प्रचरति चतुरो धीरसारंगरागः ॥
इति सारंगः ।

देशीसम्मेलजातस्त्रिविधसमपसः पूर्णरूपोतिगौरः
कण्ठे मौक्तिकमालो धृतमुकुटशिराश्चित्रवासाश्च रम्यः ।
पुष्पश्रीकन्दुहस्तो युवजनसहितो मन्मथानन्दकर्ता
शृंगारी पण्यवीथ्यां स तरुणरवणः शोभते सायमेषः ॥
इति रवणः ।

सत्रिः पूर्णो द्विनेत्राम्रियमरिगमनी राजवृंदैः समेतो
गौरस्तांबूलवक्त्रः सिततरवसनः कण्ठरत्नैकमालः ।
कंजाक्षः छत्रमूर्द्धाभयचरणयुतो रत्नसिंहासनस्थः
कल्याणोयम्मनाद्यः परिजनसहितो राजतेऽसौ दिनान्ते ॥
इति कल्याणः ।
इति देशिकारपरिवारः ।

शृंगारी सुंदरः स्तूत्युपपवदनजः कण्ठनक्षत्रमालः
श्रीरागः श्वेतवासाः प्रथमगतिगताः धैवतोरिर्गनी स्युः ।

आरोहे धैवतोगस्त्ववगमधगजः सत्रिपूर्णोत्र गौरो
ग्रीष्मे सायं सुनृत्ये विलसति सरसं हस्तलग्नालिपद्मः ॥
इति श्रीरागः ।

रामक्रीमेलजाता धगपरिरहिता सत्रिका षोडशाढ्या
चित्रं वस्त्रं दधाना करधृतकमला कर्णनेत्रा सुकेशी ।
चैत्री मुद्रा निपूर्वा वरयवनपुरी कर्पटीभिक्षसार्धं
संक्रीडंती दिनान्ते चतुररतिकला गौरदेहा तु गौडी ॥
इति गौडी ।

गौडीमेले सुलग्ना प्रथमगुणरतिस्त्यक्तगा पंकजाक्षी
भर्तुः संतापहंत्री स्मितविधुवदना गीतनृत्याभिसक्ता ।
गौरांगी शुक्लवस्त्रा तरुणतरमदोन्मत्तमातंगयानी
शृंगाराढ्या हि पाडी युवजनहृदयानंदिनी वासरांते ॥
इति पाडी ।

गुर्जर्यामेलजाता स्फुरिततरसपा पादिमध्यांतपूर्णा
वक्षोहारायताक्षी सितकरवसना रक्तकूर्पासिका या ।
नानाशृंगारभूष्या मृदुमधुवचना श्यामलांगी सुतन्वी
भर्तुः संकेतकं सद्विमलगुणकरी कामिनी याति सायम् ॥
इति गुणकरी ।

संपूर्णा सत्रिका या गुणविधुगनिगा किन्नरीवाद्यहस्ता
श्यामांगी दीर्घनेत्रा गुरुजलजगणैः कंठमालादिभूष्या ।
मध्ये सद्रक्तवस्त्रा वरगजगमनी स्वर्णकूर्पासयुक्ता
वक्तुं सायं प्रयाति प्रियचरितगुणं नादरामक्रिया सा ॥
इति नादरामक्रिः ।

गुर्जर्यामेलयुक्ता रिधपरिरहिता सत्रिका नीलवस्त्रा
गौरी मुक्तालका या नवनगरचिता कामसंकेतसंस्था ।
नीपच्छायोपविष्टा विमलकरतले पद्मपत्रं दधाना
गुण्डक्री भामिनी सा प्रियतमपदवीं प्रेक्षयंती प्रभाते ॥
इति गुण्डक्री ।

नृत्यासक्तः सहिष्णुर्नयनगतिगनिः सादिमध्यांतपूर्णो
वक्षोहारं सुरत्नं सुकटकमुकुटं चित्रवस्त्रं दधानः ।
गौरः कामी सुटक्को मदनमदभरश्चंदनालिप्तदेहः
पुष्पाणां कन्दुहस्तो विचरति चतुरः कामदूतः सदाऽसौ ॥
इति टक्कः ।

गांधारो देवपूर्वस्त्वनलगतिगनिः सत्रिकः पूर्णरूपो
नैरन्तर्यं चकास्ति प्रथमगतिरिधो रत्नसिंहासनस्थः ।
इन्द्राद्यैः स्तूयमानो रसपतिरसिकश्चंदनालिप्तदेहः
शुभ्रं वस्त्रं दधानः करधृतकुमुदः सर्वभूषाभियुक्तः ॥
इति देवगांधारः ।

गोडीमेले सुजातो रिपपरिरहितो वा निमध्यांतपूर्णो
वीरः शृंगारनिष्ठो वरशुकरुचिभा मूसलीकस्य मित्रम् ।
पद्मास्यः पद्मनेत्रः सिततरवसनः कण्ठमालादिभूषः
सायंकाले सभायां प्रकटति चतुरो मालवो रागराजः ॥
इति मालवः ।

गुंडक्रीमेलजातो रसपतिसहितो न्यादिमध्यांतकोऽपः
कौसुंभी केसराणां विमलजलकणैश्चित्रितं श्वेतवासाः ।
काश्मीरस्योर्ध्वपुंड्रः सुरभितसुतनुः कण्ठकंजाक्षमालः
ताम्बूलास्यो दिनान्ते हरिभजनपरः शोभते शुद्धगौडः ॥
इति शुद्धगौडः ।

बंगालान्तश्चकर्णाट इति रिरहितो गादिमध्यान्तको यो
गौडीसम्मेलभूतः कमलकरतले पुष्पयष्टिं दधानः ।
गौराङ्गः शुक्लवासाः कटकमुकुटके पुष्पकेयूरकाढ्यः
कौसुम्भोष्णीषधारी परिजनसहितो याति पूर्वाह्नकाले ॥
इति कर्णाटबङ्गालः ॥ इति श्रीरागपरिवारः ।

ईशानाख्याभिजातस्त्रिगतिगनिरिधः सत्रिपूर्णः सधीरो
रक्ताङ्गः कञ्जनेत्रः सिततरवसनः कण्ठमालादिकाढ्यः ।
पाणौ खड्गः प्रतापी स्मितवचनपरः स्निग्धगम्भीरनादः
संध्यायां राजमार्गे शरदि हयगती राजते शुद्धनाटः ॥

इति शुद्धनाटः ।

जाता श्रीरागमेले नवगिरिरचिता सादिमध्यान्तिकाया
श्रीखण्डापङ्कचोली कुसुमसुवसनं संदधाना मृगाक्षी ।
प्रौढेषद्व्यंग्यवाक्यैः प्रियमुपहसती मालवश्री सुतन्वी
चक्रोच्छेपावकर्षैश्चपलकरतलाद्भ्राम्यती सा सदैव ॥ ॥

इति मालश्री ।

गांधाराद्यन्तमध्या गुणगतिरिनिगा धैवतद्विर्गतिर्या
ताम्बूलास्यांजनाक्षी कनकमणिमयैर्भूषणैर्भूषिताङ्गी ।
नारायण्यंगलग्ना कुसुमसुकवरी कंचुकी चित्रवस्त्रा
देशाक्षी राजकन्या प्रतिदिनमुषसि प्रेक्षते मल्लयुद्धम् ॥

इति देशाक्षी ।

गौरी श्रीकोमलांगी कजमुकुलकुचा चित्रकूर्पासवस्त्रा
सर्वांगे भूषणाढ्या मृदुतरवचना शाकपूर्वा प्रगल्भा ।
बेलावल्येकमेलाधिकविधुगतिमा सत्रिका वा पहीना
देवक्री देवकन्या बहुचतुरतरा राजतेऽह्नोऽन्तयामे

॥ इति देवक्री ॥

मुग्धा गौरी विचित्राम्बररचिततनुः सर्वशृंगारयुक्ता
माद्यंतीशारिधा वा द्विगतिगतरिधा वह्निगत्यंतगा च ।
भूरेखाचापधर्त्री मृगशिशुनयना तीव्रनेत्रांतबाणा
भर्तुर्गेहे सखीभिः सहवरमधुमाधव्युषः संप्रयाति ॥

इति मधुमाधवी ।

चन्द्रद्विस्त्रिर्गताः स्युर्गरिनय इह तु स्निग्धनेत्रा प्रगल्भा
श्यामाभीरी त्रिषङ्गा मृदुवचनपरा मूर्ध्नि वेणीं दधाना ।

मृद्वंगी नीलवस्त्रा मृदुगलविलसद्विद्रुमालिश्च कर्णे
ताटंकाढ्या हि सायं रसपतिनिनदैः रासदंडं रमन्ती ॥
इत्याभीरी ।

श्रीरागस्यैव मेलाद्रिधविधुगतिकः सादिमध्यांतकोऽसौ
श्यामांगः पीतवासा विरचिततिलकः कुंकुमैर्भालमध्ये ।
कण्ठे रत्नैकमालो ललितसुमुरलीवाद्यमानस्त्रिभंगी
शृङ्गारी भाति सायं कुसुमशरहितः श्रीजिजावंतरागः ॥
इति जिजावंतः ।

गौरस्तारुण्यपूर्णः करधृतकुलिशः संभृतानंगरूपः
कण्ठे मौक्तियमालः परिजनसहितः सर्वकिर्मीरवस्त्रः ।
शृङ्गाराढ्यः सुकामी मृदुवचनपरः षड्जमध्यादिकान्तः
प्रीतः केदारमेले दिनपतिविरतौ भाति सालंगनाटः ॥
इति सालंगनाटः ।

शृङ्गारी पीतवस्त्रः कटकमुकुटसिंहासनच्छत्रयुक्तो
गौरांगः श्रीहुसेनी सुहृदभिमदकः पूर्ववागेश्वरीष्टः ।
त्रिस्त्रिर्द्व्येकस्थिताः स्युः स्वररिधगनयः केकिकण्ठाभकोऽसौ
न्यांद्यंतांशोऽरिधो वा विलसति दिवसांतेऽपि कर्णाटरागः ॥
इति कर्णाटरागः ।

कर्णाटस्यप्रमेलप्रकटितसुतनुस्त्वादिमध्यांतषड्जः
कण्ठे हारः सरत्नः सितवसनरुचिः पाटलोष्णीषधारी ।
गौरांगो रक्तनेत्रः सहचरबहुभिर्वीरशृंगारवान्यः
छायानाटो दिनान्ते प्रहसति पथिकान् पुष्पसत्कंदुहस्तः ॥
इति छायानाटः ।

संपूर्णो द्विर्गती रिस्त्वनलगतिनिगः सग्रहन्यासकांशः
शृङ्गारी यौवनाढ्यः स्मितपरवदनः कंदुसद्दण्डहस्तः ।

गौरस्ताम्बूलवक्त्रः कुसुमशरसुहृद् रक्तवस्त्रः प्रतापी
चेतः सीमंतिनीनामनुसरति हमीरादिनाटो हि सायम् ॥

इति हमीरनाटः ॥ इति शुद्धनाटपरिवारः ।

मुग्धस्त्रीसंगतो द्विर्गतिरिगधनयः पूर्णसाद्यंतमध्यो
रुद्राणीवक्त्रजातः शिखिनकुलनटी नर्तको भूषणाढ्यः ।
श्यामांगः पीतवस्त्रः करधृतचपलाकांतिखड्गो दयावान्
प्रावृट्काले नृणां शं प्रकटयति सदा नट्टनारायणोऽयम् ॥

इति नट्टनारायणः ।

धित्तां धित्तां धितांतामिति मृदुमुरजं वाद्यमाना सुतन्वी
शृंगाराढ्या सुगौरी कमलवसनकिर्मीरकूर्पासयुक्ता ।
प्रौढा बेलावली योषसि निजमधुमाधव्यशेषस्वरास्था
धाद्यंतांशारिधा वा सरपरदसुता सत्कुरायीसहाया ॥

इति बेलावली ।

काम्बोजी मोहिनी या द्विगतिगनिरिधा सत्रिकाढ्या निमा वा
गौरी ताम्बूलवक्त्रा कुसुमजवसनं कंचुकीं चादधाना ।
कस्तूरीबिन्दुभाला कनकमणिमयैर्भूषणैर्भूषितांगी
कर्णाद्यांघ्रिः सखीभ्यामुषसि विलसती किन्नरीवाद्यहस्ता ॥

इति काम्बोजी ।

धाद्यंतांशा सपा या नयनगुणगतिश्चात्र धांत्यौ रिगौ स्तः
कस्तूरीबिन्दुभाला मृगशिशुनयना चंद्रवक्त्रा सुतन्वी ।
सावेरी हारकण्ठा सुशबरवसना पीतकूर्पासयुक्ता
व्यष्टाढ्या श्यामवर्णा वरगजगमना सस्मिता सायमेति ॥

इति सावेरी ।

तन्वी श्यामा मृगाक्षी वरकमलमुखी पीतवस्त्रं दधाना
प्रौढा सन्मूर्ध्नि वेणीं द्विजवरगमना कंचुकीं कर्बुरां च ।

वक्त्रेषद्धास्ययुक्ता दशरसरचिता चामरैर्वीज्यमाना
सावेरीमेलयुक्ता ह्युषसि तु सुहवी सत्रिका पूर्णरूपा ॥
इति सुहवी ।

सावेरीमेलरक्ता स्वरसकलयुता सत्रिका स्वैरिणी या
चित्रं वस्त्रं दधाना कठिनकुचतटे कंचुकीं मेचकीं च ।
गौरांगी पंकजाक्षी हिमकरवदना दाडिमीवीजदन्ता
सायं शृंगारपूर्णा मदनसहचरी याति सौराष्ट्रिका सा ॥
इति सौराष्ट्री ।

सावेरीमेलजातः सपपरिरहितो धग्रहन्यासकांशः
श्यामः पीताम्बरो यो मदनपरिजितः कण्ठमालादिकाढ्यः ।
विद्युन्मेघातिगर्जैरुदितशिखरिणान्नर्तयन्कीर्णपक्षान्
धारामीजन्ममित्रोप्युषसि मलहरो भाति मल्हाररागः ॥
इति मल्हारः ।

संस्थो मल्हारमेले स्वरसकलयुतो धैवतांशग्रहान्त्यः
श्यामांगः शंखमुक्तावलिरचितगलो भस्मभालः किरातः ।
रंभापत्रं च मौलौ धरति कटितटे बर्हिणां बर्हजालम्
भक्तः शम्भोः प्रभाते सुकरशरधनू राजते गौंडरागः
इति गौंडरागः ।

सव्ये दण्डं त्रिशूलं त्वपरकरतले शुभ्रवस्त्रं दधानो
भस्मांगो रक्तनेत्रो विमलसुजटिलो द्वीपिचर्मोपविष्टः ।
नासाग्रे त्यक्तदृष्टिर्गिरिशजपमना वेष्टितः शिष्यवर्गैः
केदारो वारिपोस्ति त्रिविधनिसुहवीमेलजातो निशीथे ॥
इति केदारः ।

गौरो रक्तांबरोऽसौ गुरुजलजवरश्रेणिकण्ठः सुरूपी
शृंगारी यक्षपंकैर्विरचितसुतनुर्भालभस्मैकमुद्रः ।

नृत्यारम्भप्रियो मुद्रितसुगमकवान् शंकराभूषणाख्यः
प्रातः साद्यंतमध्यः प्रचरति मधुमाधव्यशेषस्वरस्थः ॥
इति शंकराभरणः ।

गौरः सुश्वेतवस्त्रः सुरभितसुतनुर्हस्तताम्बूलधारी
कामी पुष्पेशधन्वा विरहिजनमनोवेधकः सत्रिकाढ्यः ।
चंपाजातीसुयूथीविरचितमुकुटः कण्ठमध्ये सुमालः
सायं केदारमेलेज उपविलसते यो बिहादिर्गडः स्यात् ॥
॥ इति बिहागडः ॥ इति नटनारायणपरिवारः ॥

अनंतरागाः संत्यन्ये नानादेशजनाश्रिताः ।
एतेषामुपरागाः स्युरूह्यंतां ते च तद्विदैः ॥
इति रागलक्ष्माणि ।

॥ इति रागमाला समाप्ता ॥ शुभं भवतु ॥

# रागमाला ।

## पुण्डरीकविठ्ठलविरचिता ।

प्रकाशक,

भालचंद्र सीताराम सुकथनकर, एम्. ए.

सन १९१४.

# रागमाला ।

## पुण्डरीकविठ्ठलविरचिता ।

नारायण गोविन्द रातांजनकर इत्यभिधेन

तथा

गणपतराव गोपाळराव बर्वे इत्याव्हयेन

यथामति परिशोधिता ।

सा च

मुम्बय्याम्

भालचंद्रशर्मणा

निर्णयसागरमुद्रणयन्त्रालये रामचंद्र यशवंत शेडगेद्वारा

मुद्रयित्वा प्राकाश्यं नीता ।

शक १८३५ सन १९१४.

मूल्यं ४ आणकाः ।

श्रीपुंडरीकविट्ठलविरचित

# रागमाला.

कल्याणं बहुलं देशी वसंतं ललितं मुदे ।
नटनारायणं वंदे श्रीसारंगविभासकम् ॥
विठ्ठलेन समुद्धृत्य सारं ग्रंथार्थनिर्णयात् ।
श्रीमत्कपिलमुन्यर्थं क्रियते रागमालिका ॥
रागहेतुकनादस्य भेदानादौ वदाम्यहम् ।
मनो युंक्ते विवक्ष्वात्मा हन्ति वह्निं मनोऽनिलः ॥
प्रेरयत्यनिलं प्राणानिलश्चोर्ध्वक्रमाचरम् ।
नाभिहृद्गलशीर्षास्येष्वाविर्भावयति ध्वनिम् ॥
नादोऽतिसूक्ष्मसूक्ष्मश्च पुष्टोऽपुष्टश्च कृत्रिमः ।
पंचाख्या इति धत्तेऽसौ चतुर्धा व्यवहारतः ॥
व्यवहारे त्वसौ त्रेधा हृदि मंद्रोऽभिधीयते ।
कंठे मध्यो मूर्ध्नि तारो द्विगुणश्चोत्तरोत्तरः ॥
यंत्रे तु मंद्रस्थानं स्याद्-गायके तदशक्यतः ।
मंद्रादित्रितयं स्थानं व्यवहारेऽभिधीयते ॥
हेतवो नादभेदस्य तिर्यक् सच्छिद्रनाडिकाः ।
द्वाविंशतिः प्रतिस्थानं सोपानाकारवत्क्रमात् ॥
वायुपूरणतस्तारस्तत्तारस्तूत्तरोत्तरम् ।
प्रभवंत्युच्चोच्चतराः श्रुतयः श्राव्यमात्रतः ॥
रागादिव्यवहाराय तासु सप्त स्वराः स्थिताः ।
षड्जश्च ऋषभश्चैव गांधारो मध्यमस्तथा ॥
पंचमो धैवतश्चाथ निषादश्चेत्यनुक्रमात् ।
तेषां संज्ञाः सरिगमपधनीत्यपरा मताः ॥

A



वेदाचलांकश्रुतिषु त्रयोदश्यां श्रुतौ ततः ।
सप्तदश्यां च विंश्यां च द्वाविंश्यां च श्रुतौ क्रमात् ॥
षड्जादीनां स्थितिः प्रोक्ता प्रथमा भरतादिभिः ।
असपाः पूर्वपूर्वास्ते संचरंत्युत्तरोत्तरम् ॥
त्रिस्त्रिर्गतीस्ते प्रत्येकं याति गश्च चतुर्गतीः ।
यद्यद्रागोपयोगः स्यात्तत्तदिच्छागतिर्भवेत् ॥
गन्योर्गती द्वितीये चांतरकाकलिनौ स्मृतौ ।
पंचम्यष्टादशी षष्ठी तथा चैकोनविंशतिः ॥
चतस्रः श्रुतयश्चैता रागाद्यैरप्रयोजकाः ।
शेषा अष्टादशैव स्युः श्रुतयः स्वरबोधकाः ॥
न्यूनाधिकैकगतिका मंद्रतारस्वरा यदि ।
न रागहानिकाः सर्वे स्पष्टता मध्यसप्तके ॥
चतुर्विधाः स्वरा वादी संवादी च विवाद्यपि ।
अनुवादी तु वादी तु प्रयोगे बहुलः स्वरः ॥
अंशः स्थायीतिपर्यायो रागोत्पादनहेतुकः ।
श्रुतयो द्वादशाष्टौ वा ययोरंतरगोचराः ॥
मिथःसंवादिनौ तौ स्तो गत्यादेश्च विभागतः ।
एकश्रुत्यंतरौ यौ कौ तौ मिथश्च विवादिनौ ॥
शेषाणामनुवादित्वं ज्ञेयमन्वर्थतः क्रमात् ।
क्वचिदंशः क्वचिन्न्यासः क्वचित्त्यागस्वरस्तथा ॥
तत्तद्रक्त्यानुसारेण रागेषु ग्रहतां गतः ।
गीतादिनियतमात्रः स्वरो ग्रह इतीरितः ॥
प्रयोगे बहुलोंऽशः स्यान्न्यासो गीतिसमाप्तिकृत् ।
विदारीं वानपन्यासो विदारी छेदकृन्मुहुः ॥
सर्वत्र रागतस्त्वेते स्वरभेदा भवंति हि ।
षड्जः सर्वत्र रागेच ग्रहो हि निधपादयः ॥

वर्णमात्राः प्रयोज्या ये रक्त्याधिक्यात्र ते स्वराः ।
अशेषा मूर्छनाः प्रोक्ताः षड्जस्थाने मुनीश्वरैः ॥
षड्जस्थाने स्थितैर्न्याद्यै रजन्याद्या इति स्मृताः ।
हतिः श्रुतिस्ततो लग्नजातोऽनुरणनध्वनिः ॥
भाविदीप्तः श्रोतृचित्तं स्वतो रंजयति स्वरः ।
स्वराणां निचयो ग्रामो मूर्छनादिसमाश्रितः ॥
भरतेनोदितौ शास्त्रे ग्रामौ द्वौ षड्जमध्यमौ ।
षड्जग्रामः पंचमे तु सप्तदश्यां श्रुतौ स्थिते ॥
स्वरेऽस्मिन् पंचमे किं तु षोडशीं श्रुतिमाश्रिते ।
तदैव मध्यमग्रामः सोऽत्र रागे न दृश्यते ॥
षड्जग्रामाद् स्थितान्रागान् सर्वे गायंति गायकाः ।
तस्मान्मुख्यतमः षड्जग्राम एव न मध्यमः ॥
क्रमात्सप्तस्वरारोहावरोहा मूर्छना मता ।
ताः सप्त मध्यषड्जेन मूर्छनारभ्यतेऽग्रिमा ॥
अधस्तनैर्निषादाद्यैः षड्जस्थानस्थितैः क्रमात् ।
षडन्या मूर्छनाः सादींस्तदूर्ध्वं सारयेत्क्रमात् ॥
यस्यां यावतिथः षड्जस्तावतिथ्येव मूर्छना ।
आद्या चोत्तरमंद्रा च रजनी चोत्तरायता ॥
शुद्धषड्जा मत्सरीकृताश्वक्रांताभिरुद्गता ।
नामान्येतानि मुनिभिर्मूर्छनानां यथाक्रमम् ॥
गीतोपयोगतस्तास्तु षाडवौडुवीतिकृताः ।
षट्स्वरैः षाडवाः प्रोक्तास्त्वौडुवाः पञ्चभिः स्वरैः ॥
शुद्धताना इति ख्याताः पूर्णास्तानक्रियात्मकाः ।
प्रवेशनिग्रहाभ्यां च द्विधा तानक्रिया भवेत् ॥
प्रवेशः परसादृश्यमीषत्स्पर्शस्तु निग्रहः ।
व्युत्क्रमात्कूटतानाः स्युः पूर्णापूर्णाः पुरोदिताः ॥

इति नादस्थानश्रुतिस्वरमूर्छनातानाः ।

कंचित्क्रमं विलिख्यादौ पूर्वपूर्वः परादधः ।
स्वरः स्थाप्यः स चेदग्रे तत्तत्पूर्वस्वरो भवेत् ॥
प्रस्तारो वामतः कार्यः पुरस्तूपरिवर्तिनः ।
मूलक्रमक्रमात्पृष्ठे शिष्टान् प्रस्तार ईदृशः ॥
क्रमात्पूर्वस्वरस्थाङ्कसङ्ख्यांत्यादिस्वरावलिम् ।
अंत्यादधोधो विलिखेत्कृतं त्यक्त्वा क्रमो भवेत् ॥
यदैकस्वरतश्चांत्योपांत्यधारा ततोऽन्यथा ।
मालाप्रस्तारक इति विठ्ठलेन प्रकीर्तितः ॥

इति प्रस्तारः ।

अंकानेकांकमारभ्य सप्तांस्तान्विलिखेत्क्रमात् ।
ऊर्ध्वमूर्ध्वं विहन्यात्तु पूर्वेणांकं परंपरम् ॥
एकस्वरादितानानां संख्यैवं ज्ञायते स्फुटम् ।

इति संख्या ।

मूर्छनांत्यस्वरस्थांकाः प्रश्नांकैः पातयेत्तु तान् ॥
शेषान्प्राक्प्राक्स्वरस्थांकैर्यथाहननसम्भवैः ।
क्रमेण पातयेद्येनाहतिस्तावतिथः स्वरः ॥
हतेरभावतः किं तु कोपि पूर्वस्थितः स्वरः ।
स्याद्द्वितीयाद्गणनं नष्टसिद्धिर्भवेत्तदा ॥

इति नष्टम् ।

नष्टबोधगता येंकास्तानन्त्याङ्केषु पातयेत् ।
शिष्ट उद्दिष्टसिद्धिः स्यादित्यभाषत विठ्ठलः ॥

इत्युद्दिष्टम् ।

गानक्रियोच्यते वर्णः स चतुर्धा निरूपितः ।
स्थाय्यारोह्यवरोही च संचारीत्यथ लक्षणम् ॥
स्थित्वा स्थित्वा प्रयोगः स्यादेकस्यैव स्वरस्य यः ।
रागादिव्यवहारेषु स्थायी वर्णः स उच्यते ॥
आरोहन्ति स्वरा यत्र चारोही स प्रकीर्तितः ।
यत्र चैवावरोहन्ति सोवरोहीति गण्यते ॥

एतेषां मिश्रणाद्वर्णः संचारी परिकीर्तितः ।

इति वर्णाः ।

विशिष्टवर्णसंदर्भमलंकारं प्रचक्षते ॥
तस्य भेदा बहुतरास्तत्र स्थायीगतान्ब्रुवे ।
एषामाद्यंतयोरेकाः स्वरास्ते स्थायिनि स्थिताः ॥
मंद्रादिश्चाथ मंद्रांतो मंद्राद्यंताद्वयस्ततः ।
मंद्रमध्याभिधः पश्चात्पंचमः क्रमरेचितः ॥
स्थायिवर्णगताः पंचालंकाराः परिकीर्तिताः ।
विस्तीर्णः सन्निकर्षश्च प्रेंखः प्रच्छादनस्ततः ॥
आक्षिप्तबिंदुहसिताः सप्त चारोहिणि स्थिताः ।
प्रसादः प्राङ्मुखोत्क्षेपौ परिवर्तोद्वाहितौ ततः ॥
निःकूजितो रेचितश्च स्खलितः क्रमरंजितौ ।
ह्लादमानश्च हुंकारः श्येनः संचारिवर्णगाः ॥
त्रयोदश क्रमादेषामथ लक्षणमुच्यते ।
मंद्रप्रकरणेऽत्र स्यात् मूर्छना प्रथमः स्वरः ॥
स एव द्विगुणस्तारः पंचमो मध्य उच्यते ।
लिपौ मंद्रो बिंदुशिरास्तारो रेखाशिरा भवेत् ॥
मंद्रमध्यात्परे तारे मंद्रादिः कथितो यथा संपसं ।
तद्वैलोम्ये तु मंद्रान्तः । संपसं । मंद्रयोर्मध्यगे पुनः ॥
तारे च मंद्राद्यंतः स्यात् । संसंसं । तारयोर्मध्यगे पुनः ।
मंद्रे च मध्यमध्याख्यमलंकारविदो विदुः ॥ संसंसं ॥
आद्यन्ते मूर्छनादिश्चेत् स्वरो मध्ये द्वितीयकः ।
सैका कलाऽथ चेन्मध्ये तृतीये च चतुर्थके ॥
सा द्वितीयापंचमाद्यास्त्रयोंतश्चेत्कलापरा ।
एवं कलात्रयेणोक्तोऽलंकारः क्रमरेचितः ॥

संरिसं । संमगसं । संपधनिसं ॥

इति स्थायिगतालंकाराः ॥

मूर्छनादेः स्वराद्यत्र क्रमेणारोहणं भवेत् ।
स्थित्वा स्थित्वा स्वरैर्दीर्घैः स विस्तीर्णोऽभिधीयते ॥

सारीगामापाधानी ॥

ह्रस्वैः स्वरैः सन्निकर्षो द्विर्द्विरुक्तैर्निरंतरैः ।

सस रिरि गग मम पप धध निनि

स्वरद्वयं समुच्चार्य पूर्वपूर्वयुतं परम् ॥
यदांदोलितमारोहे प्रेंखाख्यः कथितो यथा ।

सरी रिगा गमा मपा पधा धनी निसा

त्रिस्वराद्या कलांते च पूर्वपूर्वा यदादिमा ॥
कला च त्रिस्वरे यत्र तदा प्रच्छादनाभिधः ।

सरिगा गमपा पधनि ॥

एकांतरं स्वरयुगं तादृक्पूर्वयुतं परम् ॥
क्रमादारोहति यदा तदाऽऽक्षिप्तः प्रचक्ष्यते ।

सग गप पनि ॥

पूर्वस्वरं त्रिरुच्चार्य सकृत्तत्परकं स्वरम् ॥
एवं क्रमं क्रमात् कुर्वन्नारोहे विंदुसंज्ञकः ।

सससरि रिरिरिग गगगम मममप पपपध धधधनि निनिनिसं

यत्रैकोत्तरवृद्धाभिरावृत्तिभिरुदीरिताः ॥
आरुह्यंते स्वराः प्राह हसितं तं मुनीश्वराः ।

सा रिरी गगगा ममममा पपपपपा धधधधधधा निनिनिनिनिनिनी

आरोहणे क्रमादेते सप्त चाप्यवरोहिणि ॥ इति आरोह्यवरोह्यलंकाराः ॥

पूर्वपूर्वः परस्योर्ध्वाधस्ताच्च क्रियते स्वरः ।
यदा तदा च प्रसादं तमाह श्रीरतो मुनिः ॥

सरिस रिगरि गमग मपम पधप धनिध निसनि

कला गता गतवती द्विस्वरैकैकहानत: ।
यत्रान्यास्तादृश: स स्यात्प्राङ्मुख: परिकीर्तित: ॥

सरिरिस रिगगरि गममग मपपम पधधप धनिनिध निससनि

त्रिस्वराश्चेत्कला पूर्वपूर्वत्यागोर्ध्वसंक्रमै: ।
यदातदोत्क्षेपकाख्य: प्रसिद्धो गानवेदिनाम् ॥

सरिग रिगम गमप मपध पधनि धनिस

स्वरं द्वितीयमुज्झित्वा त्रिस्वराद्या कला यदि ।
त्यक्तादारभ्य तादृश्योऽन्यास्तदा परिवर्तक: ॥

सगम रिमप गपध मधनि

कलायां त्रिस्वरान्गीत्वावरुह्यैकं परा: कला: ।
यत्रैकैकोज्झिता गीता तद्वदुद्वाहितस्तु स: ॥

सरिगरि रिगमग गमपम मपधप पधनिध धनिसनि

प्रसादस्य कलां गीत्वा तत्कलायास्तृतीयकं ।
गत्वाद्यगानाद्भवति नि:कूजितकनामक: ॥

सरिसगस रिगरिमरि गमगपग मपमधम पधपनिप

आद्यस्वरं द्वितीयं च तृतीयं च द्वितीयकं ।
पुन: क्रमात्स्वरांस्त्रींश्च गीत्वा चैककला यदि ॥

एवं कलाषट्कं च गत्वाऽसौ रेचित: स्मृत: ।

सरिगरिसरिगा रिगमगरिगम गमपमगमप मपधपमपध पधनिधपधनि
धनिसनिधनिसा

कलां प्रयुज्य मंद्रादेर्द्विरुक्तोर्ध्वस्वरान्विताम् ॥

अवरुह्येत चेदेष स्खलिताख्यस्तदा भवेत् ।

सरीगममरीगसा रिगमपपगमरी गमपधधमपग मपधनिनिपधम पधनिसासाधनिप.

यत्रासौ क्रम इत्युक्तः कलाद्वित्रिचतुःस्वराः ॥

आद्यस्वराद्यास्तिस्रः स्युर्द्वितीयाद्यादयस्तथा ।

सरिसरिगसरिगम रिगरिगमरिगमप गमगमपगमपध मपमपधमपधनि पधपधनिपधनिसा

द्विरुक्ता यदि मन्द्रान्ता मन्द्रादेः स्युः कलास्तथा ॥

रंजिताख्यो भवेदेष प्रसिद्धो गानवेदिनाम् ।

सगरिसगरिसा रिमगरिमगरी गपमगपमगा मधपपधपमा पनिधपनिधपा.

ह्रादमाने तु मन्द्रान्ता मन्द्रादेस्तु कला मताः ॥

सगरिस रिमगरि गपमग मधपम पनिधप.

आदिमेन कला यत्र द्विस्वराद्या गतागतैः ।

स्वरैरेकोत्तरैर्वृद्धैः स हुंकारो निगद्यते ॥

सरिरिसा सरिगगरिसा सरिगममगरिसा सरिगमपपमगरिसा सरिगमपधधपमगरिसा सरिगमपधनिनिधपमगरिसा.

क्रमात्सरिगमाद्यैः स्याच्छ्येनः संवादियुग्मकैः ।

सप रिध गनि मसा.

एते संचार्यलंकारा आरोहेण प्रदर्शिताः ॥

एतानेवावरोहेण प्राह श्रीभरतो मुनिः ।

इति संचार्यलंकाराः ॥

इति प्रसिद्धालंकाराः पंचविंशत्युदीरिताः ॥

अनंतत्वात्तु ते शास्त्रे न सामस्त्येन कीर्तिताः ।

रक्तिलाभस्वरज्ञानं वर्णगानां विचित्रता ॥

इति प्रयोजनान्याहुरलंकारनिरूपणे ।

इत्यलंकाराः ।

गमकः स्वरकंपः स्यात् श्रोतृहृदयरंजकः ॥
तस्य भेदास्तु तिरिपः स्फुरितः कंपितस्तथा ।
लीनआंदोलितवलित्रिभिन्नकुरुलाहतः ॥
उल्लासितः प्लावितश्च मुद्रितो हुंफितस्ततः ।
नामितो मिश्रितः पंचदश इत्यथ लक्षणम् ॥
लघ्विष्टडमरुध्वानकंपानुकृतिसुंदरः ।
द्रुततुर्यांशवेगेन तिरिपः परिकीर्तितः ॥
स्फुरितो द्रुततृतीयांशात् द्रुतार्धात्कंपितं विदुः ।
द्रुतवेगेन लीनः स्यात् आंदोलो लघुवेगतः ॥
वलिर्वेगाधिकत्वेन त्रिभिन्नस्तु स उच्यते ।
त्रिस्थानेषु सवैचित्र्यमविश्रांतघनस्वरः ॥
कुरुलोवलिरेव स्यात्कण्ठे कोमलग्रंथिलः ।
स्वरमग्रिममाहत्य निवृत्तस्त्वाहतो भवेत् ॥
उल्लासितः क्रमाद्गच्छन् प्लावितः प्लुतमानतः ।
हृदयंगमहुंकारो गंभीरो हुंफितो भवेत् ॥
मुद्रितो मुखमुद्रेण नामितो नामनाद्भवेत् ।
कतिचिन्मिश्रणान्मिश्रो बहुधाप्यूह्यतां बुधैः ॥

इति गमकाः ।

रागस्यावयवः स्थाय्यो वागो गमक उच्यते ।
मयोक्तो गमकः पूर्वं त्वधुना स्थाय्य उच्यते ॥
भजनः स्थायनगतिः शब्दढालौ च वाहिनी ।
छायावेतिक्रमात्तेषां लक्षणं प्रतिपाद्यते ॥
रागस्यातिशयाधानाद्भजनः परिकीर्तितः ।
मुक्तशब्दपरिग्राह्यः शब्दो माधुर्यपुष्टतः ॥

12



चतुर्भेदो भवेच्छब्दः खाङ्गलो नारहाटकः ।
बोंबको मिश्रकश्चेति कफजः खाङ्गलो मतः ॥
असौ सुस्निग्धमधुरप्रौढतासौकुमार्ययुक् ।
पित्तजो नारहाटः स्याद्रुक्षगंभीरयुग्ध्वनिः ॥
वातजो बोंबकः स्यात्तु स्थूले निःसारतायुतः ।
एतत्संमिश्रणादुक्तो मिश्रकः सन्निपातकः ॥
निःसाररुक्षताहीन उत्तमः परिकीर्तितः ।
खाङ्गलो बोंबयुक्तश्चेन्मध्यमः कथितो बुधैः ॥
बोंबनारहाटयुक्तः शब्दानामधमः स्मृतः ।
विलुंठनात्मको मुक्ताफलवद्वाल उच्यते ॥
आरोहादित्रये निष्ठं कंपनं वाहिनी भवेत् ।
छायाकाकुः षट्प्रकाराः स्वररागान्यरागजाः ॥
स्याद्देशक्षेत्रयंत्राणां तल्लक्षणमथोच्यते ।
श्रुतिन्यूनाधिकत्वेन या स्वराश्रयसंश्रयात् ॥
स्वरांतरस्य रागे स्यात्स्वरकाकुरसौ मतः ।
या रागस्य निजच्छाया रागकाकुं तु तां विदुः ॥
सा त्वन्यरागकाकुर्या रागे रागांतराश्रयात् ।
सा देशकाकुर्या रागे भवेद्देशस्वरभावतः ॥
शरीरं क्षेत्रमित्युक्तं प्रतिक्षेत्रनिसर्गतः ।
रागे नानाविधा काकुः क्षेत्रकाकुरिति स्मृता ॥
वीणावंशादिकोत्थासौ यंत्रकाकुः सतां मता ।

इति स्थाय्यः ।

वर्णालंकारसंपन्ना गमकस्थाय्यचित्रिता ॥
आलप्तिरुच्यते तज्ज्ञैर्बहुवैचित्र्यसंयुता ।
ग्रहांशतारमन्द्राणां न्यासापन्यासयोस्तथा ॥
अल्पत्वस्य बहुत्वस्य षाडवौडुवयोरपि ।
अभिव्यक्तिर्यत्र दृष्टा स रागालाप उच्यते ॥

आलप्त्यालापयोस्सम्यक् प्रकटीकरणं च यत् ।
रागालापनमित्युक्तं लक्ष्यलक्षणकोविदैः ॥
आलप्तिर्द्विविधा प्रोक्ता रागवस्तुविशेषणात् ।
स्वस्थानकैश्चतुर्भिर्या क्रियते रूपकं विना ॥
रागालप्तिर्यत्र रागः स्वरैः संवेश्यते च सः ।
स्थायी ततश्चतुर्थस्तु द्व्यर्ध इत्यभिधीयते ॥
स्थायिस्वरादष्टमस्तु द्विगुणः परिकीर्तितः ।
द्व्यर्धद्विगुणयोर्मध्ये स्थिता अर्धस्वराभिधाः ॥
स्थायिनोद्व्यर्धतोऽर्वाक्च स्वरसंचालनं तथा ।
स्थायिनोऽधस्तनं चापि वादनात्प्रथमं भवेत् ॥
द्व्यर्धस्वरे चालयित्वा न्यसनं तु द्वितीयकम् ।
अर्धस्वरे चालयित्वा तदेव तु तृतीयकम् ॥
द्विगुणं चालयित्वा तु स्थायिन्यासाच्चतुर्थकम् ।
एभिश्चतुर्भिः स्वस्थानै रागालप्तिर्मता सताम् ॥
आलाप एव ठायः स्यात् पृथग्भूतविदारिकः ।
रूपकस्थेन रागेण तालेन च विधीयते ॥
रूपकालप्तिरेषा तु द्विविधा परिकीर्तिता ।
प्रतिग्रहणिकाद्या च भंजनी संज्ञिकापरा ॥
विधाय स्थायमालप्ती रूपकावयवो यदि ।
प्रतिगृह्येत सा प्रोक्ता प्रतिग्रहणिका बुधैः ॥
भजनी द्विविधा ज्ञेया स्थाय्यरूपकभंजनात् ।
यदा तत्पदमानेन स्थाय्यो रूपकसंस्थितः ॥
नानाप्रकारः क्रियते सा ज्ञेया स्थाय्यभंजनी ।
तैः पदैस्तेन मानेन समग्रं रूपकं यदि ॥
अन्यथात्वान्यथा गायेदसौ रूपकभंजनी ।
इममेवोच्यते लोके नेमशब्देन गायकैः ॥

इत्यालप्तिभेदाः ।

14



स्तोकैः स्तोकैस्तनुस्थायैः प्रसन्नैर्बहुभंगिभिः ।
जीवस्वरव्याप्तिमुख्यै रागस्य स्थापना भवेत् ॥
इति स्थापना ।

योऽसौ ध्वनिविशेषस्तु स्वरवर्णविभूषितः ।
रंजको जनचित्तानां स रागः कथितो बुधैः ॥
स्वराणां क्रमभेदाच्च नानागमकभेदतः ।
षाडवौडवभेदाच्च संपूर्णा इति भेदतः ॥
ग्रहांशन्यासभेदाच्च नानादेशजनोद्भवाः ।
अनंता रागभेदाः स्यू रूढिदेशस्वराभिधाः ॥
शुद्धसालगसंकीर्णा इति रागास्त्रिधा पुनः ।
नान्योपजीविनः शुद्धाः केवला रंजनात्मकाः ॥
छायांतरेण रक्ता ये रागाः साळगसंज्ञकाः ।
मूलछायांतराद्रक्ता रागाः संकीर्णका इति ॥
अनन्तत्वात्तु रागाणां प्रत्येकं वक्तुमक्षमः ।
केषांचिन्मतमाश्रित्य कति रागान्वदाम्यहम् ॥
शुद्धभैरवहिंदोलौ देशिकारस्ततः परम् ।
श्रीरागः शुद्धनाटश्च नट्टनारायणश्च षट् ॥
रागा एवं मयाख्यातास्तद्धेतुः कथ्यतेऽधुना ।
सद्यो जातोद्भवः शुद्धभैरवो वामदेवतः ॥
हिंदोलो देशिकाराख्यस्त्वनघात्तत्पुरुषतः ।
श्रीरागः शुद्धनाटाख्योपीशानवदनोद्भवः ॥
नटनारायणो रागो गिरिजामुखजस्ततः ।
एतेषां वनिताः पुत्राः पंच पंच क्रमात् ब्रुवे ॥
धन्नासी भैरवी चैव सैंधवी मारवी तथा ।
आसावरीति पंचैताः शुद्धभैरवसुभ्रुवः ॥
भैरवः शुद्धललितः पंचमः परजस्तथा ।
बंगालश्चेति पंचैते शुद्धभैरवसूनवः ॥

भूपाली च वराटी च तोडी प्रथममंजरी ।
तुरुष्कतोडिका चेति हिंदोलस्य हि नारिका: ॥
वसंत: शुद्धबंगाल: श्याम: सामन्तकस्तथा ।
कामोदश्चेति पंचैते हिंदोलस्य सुता अमी ॥
रामक्री बहुली देशी जयत: श्रीश्च गुर्जरी ।
देशिकारस्य पंचैता विख्याताश्च वरांगना: ॥
ललितश्च बिभासश्च सारंगस्त्रिवणस्तथा ।
कल्याण इति पंचैते देशिकारस्य सूनव: ॥
गौडी पाडी गुणकरी नादरामक्रिया तथा ।
गुंडक्रीति च पंचैता: श्रीरागेहिसमाश्रिता: ॥
ढक्कश्च देवगांधारो मालव: शुद्धगौडक: ।
कर्नाटबंगाल इति श्रीरागस्य तनूद्भवा: ॥
मालव: श्रीश्च देशाक्षी देवक्री मधुमाधवी ।
आहेरी चेति विख्याता: शुद्धनाटवरस्त्रिय: ॥
जिजावंतश्च सालंगो नाट: कर्नाटकस्तत: ।
छायानाटो हमीरादिर्नाटो नाटस्य सूनव: ॥
बेलावली च कांबोजी सावेरी सुहवी तथा ।
सौराष्ट्री चेति पंचैता नटनारायणस्त्रिय: ॥
मल्हारगोंडकेदारा: शंकराभरणस्तत: ।
बिहागडश्चेति सुता नटनारायणस्य च ॥
अथैषां लक्षणं वक्ष्ये मूर्त्याभरणपूर्वकम् ।
चंद्रनेत्रादिकां संज्ञां ज्ञायतां लोकत: सुधी: ॥

सद्योजातोद्भवोऽयं प्रथमगतिगनि: सत्रिको रि: कपर्दी
रक्त: श्यामस्त्रिशूली सिततरवसनो भस्मदेहस्त्रिनेत्र: ।
कंठे शृंगं दधान: श्रवणयुगलतो मुद्रिके चंद्रजूटो
हैमन्तेपि प्रभाते विलसति वृषपो भैरव: शुद्धपूर्व: ॥

इति शुद्धभैरव: ।

16



सर्वांगे भूषणाढ्या धनिरिगविधुरा सत्रिकास्तारिधाभ्याम्
दूर्वाश्यामा विचित्रांबररचिततनुर्दाडिमीपुष्पहस्ता ।
नेत्रान्तर्बाष्पयुक्ता धवलसहचरी पूर्वजेराकनाम्नः
पश्यन्ती गीतवर्त्मोषसि बहुधनदा धन्यधन्नासिका सा ॥

इति धन्नासी ।

धन्नासीमेलजाता स्वरसकलयुता चादिमध्यान्तषड्जा
तन्वंगी चंद्रवक्त्रा कनकसमतनुः श्वेतवस्त्रं दधाना ।
भाले सिन्दूरबिन्दुर्विकसितवदना सर्वशृंगारकाढ्या
नृत्यन्ती गीयमाना द्रविडजनरता भैरवी सा प्रभाते ॥

इति भैरवी ।

भैरव्या मेलजाता स्वरसकलरता सत्रिका चंद्रवक्त्रा
तन्वंगी पद्मनेत्रा विपुलसुजघना मत्तमातंगयानी ।
मंदंमंदं वदंती बहुविधगमकैः सैंधवी रक्तवस्त्रा
युद्धे योधेश्वराणां विमलतरयशः प्रार्थयंती सदा सा ॥

इति सैंधवी ।

चंद्रास्या दीर्घकेशी त्वनलगतिनिगा सत्रिकास्तारिधाभ्याम्
हेमाभा दीर्घरूपा बहुविधकुसुमैर्भूषिता स्निग्धनेत्रा ।
मेवाडस्याग्रजाता मृगशिशुनयनी रक्तवस्त्रं दधाना
चेपद्धास्या स्तुवंती युधि नृपतिगणान् मारवी सा सदैव ॥

इति मारवी ।

गांधारोत्राग्निगः स्यात्प्रथमगतिगनिर्मादिमध्यांतपूर्णा
तन्वंगी श्यामवर्णा करधृतमुकुला सर्वशृंगारयुक्ता ।
रंभायाः काननेषु प्रियविमलयशोऽध्यापयंती सुकेशी
गंधर्वैः स्तूयमाना प्रियरसकरुणा शश्वदासावरी सा ॥

इति आसावरी ।

भस्मांगः कण्ठशृंगी श्रवणयुगलतः शंखमुद्रे दधानः
पादत्राणे प्रवाले फणिपतिसुजटाबद्धमौलिः प्रमत्तः ।

उज्झालस्यानुयायी पटुतरवचनः किन्नरीवाद्यमानः
पूर्णो धाद्यंतमध्यस्त्वनलविधुगनिर्भैरवः पूर्वयामे ॥

इति भैरवः ।

सांशाद्यंतः प्रवीणः शुचितरललितो मारवीमेलजातो
भाले धत्ते स बिंदुं कनकसमनिभं शुभ्रवस्त्रं दधानः ।
गारांगश्चंपमैत्री कुसुमभरशिराः पंकजाक्षो विलासी
कामी तांबूलहस्तः प्रतिदिनमुषसि प्रार्थकः खंडितानाम् ॥

इति शुद्धललितः ।

श्यामं तांबूलहस्तं करधृतकुसुदं मारवीमेलजातं
पत्रिं त्रारिं सुरेशं पिकमृदुवचनं वेणुकं पीतवस्त्रम् ।
लिप्तांगं यक्षपंकैः शिरसि सुमुकुटं बालचंद्रार्कभालम्
गायंतीहत्र नाके सकलसुरवराः पंचमं सुप्रभाते ॥

इति पंचमः ।

सत्रिः संपूर्णकोसौ द्विविधगतिगनिस्तालहस्तः सुभार्यः
पृष्ठे पैनाकपाणिर्बहुविधरचितैर्भूषणैः शोभमानः ।
गौरो दीर्घस्वरूपी मृदुवचनपरः सर्वलोकोपकारी
नित्यं याच्यः सदाहर्निशि च स परजो भाति चाग्रे नृपाणाम् ॥

इति परजः ।

अंत्यो गश्च स्वरौ स्तस्त्रिनयनगतिगौ सत्रिकाढ्यश्च पूर्णो
वामे पाणौ सुमालां शशधरमणिभां शुभ्रवस्त्रं दधानः ।
बंगालः पानपात्रं विशदकनकजं सव्यहस्ताग्रभागे
विद्वान्संगीतवेदं पठति च नितरां गद्गदैः कंपभेदैः ॥

इति बंगालः । इति भैरवपरिवारः ।

अस्मिन्रागे भवेतां प्रथमगतिगनी सत्रिका त्रारिपोऽसौ
गौरांगः पीतवासा घनकुसुमवने क्रीडको दोलयाने ।
हिंदोलः स्त्रीसहायः कटकमुकुटमुक्तामहाकुंडलाढ्यः
प्रातःकाले वसंते विचरति चतुरो वामदेवाभिजातः ॥

इति हिंदोलः ।

जातो मल्हारमेले निगरति रहिता मादिमध्यांतरूपा
नासाग्रे स्वर्णपुष्पं कमलनयनयो: कज्जलं कंठमालाम् ।
मौक्तेयं भालमध्ये वरतलतिलकं कंकणे हस्तमूले
रक्तं वस्त्रं दधाना त्वनवरतमदा याति भूपालिका सा ॥

इति भूपाली ।

स्वागारे स्वेच्छया या मृदुतरवचनै: क्रीडितावालिपुंजै-
श्चित्रं वस्त्रं दधाना कुसुमसुकवरी चामरैर्वीज्यमाना ।
नानाशृंगारयुक्ता मदनसहचरी कोमलांगी सुगौरी
सायंपूर्णा त्रिषड्जा ह्यनलगतिगती राजते सा वराली ॥

इति वराली ।

सव्ये हस्ते सुदंडी त्वपरकरतले तालयुग्मं दधाना
लिप्तांगा चंदनाद्यै: सुशवरवसना सर्वभूषाभियुक्ता ।
प्रौढा तांबूलवक्त्रा विकसितनयना मोहिनी मुक्तचूर्णा
पूर्णामाद्यंतमध्या प्रथमगतिगनिस्तोडिका प्रातरेव ॥

इति तोडिका ।

जाता गौडस्य मेले धरिपरिरहिता वादिमध्यांतपाया
गौरांगी पीतवस्त्रा मृगमदतिलकं भालमध्ये दधाना ।
हस्ते वीणैकवाद्या सरसमधुरवाक्मुक्तकेशी कुरंजी
प्रीतालंकारयुक्ता प्रथमपदधुरा मंजरी सा सदैव ॥

इति प्रथममंजरी ।

छायानाटस्य मेले प्रकटितसुतनुर्मादिमध्यांतपूर्णा
गौरांगी मूर्ध्नि वेणीं कनकमणिमयं कर्णपुष्पं दधाना ।
प्रौढेषद्रक्तनेत्रा यवनसुवनितावस्त्रवेशाधिकाढ्या
द्राक्षां पीत्वा प्रभाते विलसति चतुरा यावनी तोडिका सा ॥

इति तोडी ।

जातो हिंदोलमेले स्वरसकलयुत: सत्रिकश्च प्रभाते
त्वारामे क्रीडमानो नवदलकुसुमामोदलुब्धालिवृंद: ।

तांबूलास्योतिगौरो रतिपतिसदृशो रक्तवस्त्रश्च सार्धं
योषिद्भिः सर्ववाद्यारवरभसमहद्धास्ययुक्तो वसंतः ॥
इति वसंतः ।

जातः कर्णाटमेले स्वरसकलरतः सत्रिकः पूर्णकायः
शुभ्रांगः पीतवासा मणिगणरचिते कुंडले कर्णयोः स्तः ।
आस्ते मौलौ किरीटं करतलकमलः कुंकुमालिप्तदेहः
प्रातर्याच्यः प्रमत्तो युवजनसहितः शुद्धबंगालकोऽसौ ॥
इति शुद्धबंगालः ।

काकल्या चांतरेण प्रकटवरतनुः सत्रिकः पूर्णरूपः
श्यामांगः पीतवासा मधुरतररवः कंपभेदैर्विचित्रैः ।
कंठे रत्नैकमालो विरचिततिलकः कुंकुमैर्भालमध्ये
रागः श्यामाभिधानस्त्वनवरतनदः कामिनीनां विनोदे ॥
इति श्यामः ।

कर्णाटाख्यस्य मेले प्रकटवरतनुः पूर्णरूपस्त्रिषड्जः
पद्मांघ्रिः पद्मनेत्रः श्रवणयुगलतः कुंडले द्वे दधानः ।
बिभ्रन्मौलौ किरीटं बहुकुसुममयं कंठमाली सुवस्त्रं
प्रातःकाले चकास्ति प्रबलगमकवान् प्रौढसामंतरागः ॥
इति सामंतरागः ।

कामोदः कामरूपी धृतमुकुटकरः श्वेतवस्त्रं दधानः
कस्तूरीबिंदुभालः कुसुमसुमुकुटः कंठमालादिकाढ्यः ।
वक्ता स व्यंग्यवाक्यं युवजनसहितो वेत्रहस्तः प्रतापी
संपूर्णः सत्रिकोऽसौ विधुगतिगनिकश्चापराह्णे चकास्ति ॥
इति कामोदः । इति हिंदोलपरिवारः

जातो घोराख्यवक्त्रात् त्रिगतिगनिगमाः सत्रिपूर्णोत्र रागे
रक्तांगः पद्मनेत्रः सितगजगमनो बाखरोजस्य मित्रम् ।
कंठे मुक्तैकमालो धृतमुकुटशिराश्चित्रवासाः सखड्गो
मध्याह्ने योधसंघे सुललितशिशिरे देशिकारश्चकास्ति ॥
इति देशिकारः ।

पूर्णेन्द्वास्या सुमुक्तामणितरलगला नीलवस्त्रं दधाना
कूर्पासं रक्तवर्णं करचरणयुगे कंकणे नूपुरौ च ।
रामक्री चंचलाक्षी विमलतरगिरं चारटन्ती विदग्धा
शृंगाराढ्या त्रिषड्जा त्वनलगतिगनी राजते सर्वदैव ॥

इति रामक्री ।

रामक्रीमेलदृष्टा निगपरिरहिता वापि माद्यंतमध्या
तन्वंगी श्यामवर्णा विलुठितकवरी सव्यहस्ते सुदंडी ।
तांबूलास्या प्रगल्भामरहटवनिता वस्त्रभूषाधिकाढ्या
नासायां पीनमुक्ता बहुमतिबहुली शोभते पूर्वयामे ॥

इति बहुली ।

धंम्मिद्रे मद्रिमालां श्रवणयुगलत: कुंडले कंठमालां
कूर्पासं शुभ्रवस्त्रं चरणकरयुगे नूपुरौ कंकणे च ।
आहंगस्य प्रपौत्री मृदुसुकरतले पल्लवं संदधाना
गांधारांत्येंदुगौस्तस्त्रिसमयरिरपा सर्वदा याति देशी ॥

इति देशी ।

नासाग्रे श्रीलवङ्गं जलजकुटिलकेशी कुण्डले श्रोत्रयोर्द्वे
चोलिं कौसुंभवस्त्रं शिशुविधुतिलकं चांजनं नेत्रयोश्च ।
हस्तद्वन्द्वे सुकाचप्रवलयनिचयं मूर्ध्नि वेणीं दधाना
देशीमेले रुचिज्ञा च सकलजयतश्रीस्त्रिसा चापराह्ने ॥

॥ इति जयतश्रीः ॥

संधत्ते हस्तमूले करिरदवलयान्यंघ्रिमंजीरयुग्मं
नासाग्रे हेमपुष्पं कनकसमनिभं कंचुकीं रक्तवस्त्रम् ।
बिम्बोष्ठी रक्तवर्णा दिवसुररचिता मुक्तकच्छप्यसा वा
रामक्रीमेलसौख्यात्रिसमयरिरसौ गुर्जरीयं प्रभाते ॥

॥ इति गुर्जरी ॥

देशी मेले प्रजातः स्वरसकलयुतो धत्रिकश्चंचलाक्षो
हस्ते पद्मं दधानः शुचिवसनरत: श्लिष्टशृंगारसर्वः ।

मुग्धस्त्रीश्यामलाक्षो हसति सकपटं पूर्णताम्बूलवक्त्रः
कामी कामावतारः कुटिलसुललितो भाति धृष्टः प्रभाते ॥
इति ललितः ।

गौरांगः पंकजाक्षः सुशबरवसनो भालकाश्मीरबिन्दु-
मत्रीस्रग्भूष्यकण्ठश्चतुरवरगिरं कीरमध्यापयन्यः ।
मेले तातस्य जातस्त्वधिकप्रथमभः सत्रिकोऽपः शठोऽसौ
स्वेच्छागामी प्रभाते वदति च दयितां श्रीबिभासाख्यरागः ॥
इति बिभासः ।

श्यामांगः पीतवासाः प्रबलतरगदाशंखचक्राब्जहस्तो
बाणैः शार्ङ्गेण पूर्णस्फुरदिपुधिकटिस्ताक्ष्यगो भूषणाढ्यः ।
गांधारो वेदगः स्युर्गुणगतिमनिधाः पक्षगो यस्त्रिपङ्गः
संपूर्णश्चापराह्णे प्रचरति चतुरो धीरसारंगरागः ॥
इति सारंगः ।

देशीसम्मेलजातस्त्रिविधसमपसः पूर्णरूपोतिगौरः
कण्ठे मौक्तियमालो धृतमुकुटशिराश्चित्रवासाश्च रम्यः ।
पुष्पश्रीकन्दुहस्तो युवजनसहितो मन्मथानन्दकर्ता
शृंगारी पण्यवीथ्यां स तरुणरवणः शोभते सायमेषः ॥
इति रवणः ।

सत्रिः पूर्णो द्विनेत्राग्रियमरिगमनी राजवृंदैः समेतो
गौरस्तांबूलवक्त्रः सिततरवसनः कण्ठरत्नैकमालः ।
कंजाक्षः छत्रमूर्द्धोभयचरणयुतो रत्नसिंहासनस्थः
कल्याणोयम्मनाद्यः परिजनसहितो राजतेऽसौ दिनान्ते ॥
इति कल्याणः ।
इति देशिकारपरिवारः ।

शृंगारी सुंदरः स्तूत्युपपवदनजः कण्ठनक्षत्रमालः
श्रीरागः श्वेतवासाः प्रथमगतिगता धैवतोरिगनी स्युः ।

आरोहे धैवतोगस्त्ववगमधगजः सत्रिपूर्णोत्र गौरो
ग्रीष्मे सायं सुनृत्ये विलसति सरसं हस्तलग्नालिपद्मः ॥
इति श्रीरागः ।

रामक्रीमेलजाता धगपरिरहिता सत्रिका षोडशाढ्या
चित्रं वस्त्रं दधाना करधृतकमला कर्णनेत्रा सुकेशी ।
चैत्री मुद्रा निपूर्वा वरयवनपुरी कर्पटीभिक्षसार्धं
संक्रीडंती दिनान्ते चतुररतिकला गौरदेहा तु गौडी ॥
इति गौडी ।

गौडीमेले सुलग्ना प्रथमगुणरतिस्त्यक्तगा पंकजाक्षी
भर्तुः संतापहंत्री स्मितविधुवदना गीतनृत्याभिसक्ता ।
गौरांगी शुक्लवस्त्रा तरुणतरमदोन्मत्तमातंगयानी
शृंगाराढ्या हि पाडी युवजनहृदयानंदिनी वासरांते ॥
इति पाडी ।

गुर्जर्यामेलजाता स्फुरिततरसपा पादिमध्यांतपूर्णा
वक्षोहारायताक्षी सितकरवसना रक्तकूर्पासिका या ।
नानाशृंगारभूष्या मृदुमधुवचना श्यामलांगी सुतन्वी
भर्तुः संकेतकं सद्विमलगुणकरी कामिनी याति सायम् ॥
इति गुणकरी ।

संपूर्णा सत्रिका या गुणविधुगनिगा किन्नरीवाद्यहस्ता
श्यामांगी दीर्घनेत्रा गुरुजलजगणैः कंठमालादिभूष्या ।
मध्ये सद्रक्तवस्त्रा वरगजगमनी स्वर्णकूर्पासयुक्ता
वक्तुं सायं प्रयाति प्रियचरितगुणं नादरामक्रिया सा ॥
इति नादरामक्रिः ।

गुर्जर्यामेलयुक्ता रिधपरिरहिता सत्रिका नीलवस्त्रा
गौरी मुक्तालका या नवनगरचिता कामसंकेतसंस्था ।
नीपच्छायोपविष्टा विमलकरतले पद्मपत्रं दधाना
गुण्डक्री भामिनी सा प्रियतमपदवीं प्रेक्षयंती प्रभाते ॥
इति गुण्डक्री ।

नृत्यासक्तः सहिष्णुर्नयनगतिगनिः सादिमध्यांतपूर्णो
वक्षोहारं सुरत्नं सुकटकमुकुटं चित्रवस्त्रं दधानः ।
गौरः कामी सुटको मदनमदभरश्चंदनालिप्तदेहः
पुष्पाणां कन्दुहस्तो विचरति चतुरः कामदूतः सदाऽसौ ॥
इति टक्कः ।

गांधारो देवपूर्वस्त्वनलगतिगनिः सत्रिकः पूर्णरूपो
नैरन्तर्यं चकास्ति प्रथमगतिरिधो रत्नसिंहासनस्थः ।
इन्द्राद्यैः स्तूयमानो रसपतिरसिकश्चंदनालिप्तदेहः
शुभ्रं वस्त्रं दधानः करधृतकुमुदः सर्वभूषाभियुक्तः ॥
इति देवगांधारः ।

गोडीमेले सुजातो रिपपरिरहितो वा निमध्यांतपूर्णो
वीरः शृंगारनिष्ठो वरशुकरुचिभा मूसलीकस्य मित्रम् ।
पद्मास्यः पद्मनेत्रः सिततरवसनः कण्ठमालादिभूषः
सायंकाले सभायां प्रकटति चतुरो मालवो रागराजः ॥
इति मालवः ।

गुंडक्रीमेलजातो रसपतिसहितो न्यादिमध्यांतकोऽपः
कौसुंभी केसराणां विमलजलकणैश्चित्रितं श्वेतवासाः ।
काश्मीरस्योर्ध्वपुंड्रः सुरभितसुतनुः कण्ठकंजाक्षमालः
ताम्बूलास्यो दिनान्ते हरिभजनपरः शोभते शुद्धगौडः ॥
इति शुद्धगौडः ।

बंगालान्तश्चकर्णाट इति रिरहितो गादिमध्यान्तको यो
गौडीसम्मेलभूतः कमलकरतले पुष्पयष्टिं दधानः ।
गौराङ्गः शुक्लवासाः कटकमुकुटके पुष्पकेयूरकाढ्यः
कौसुम्भोष्णीषधारी परिजनसहितो याति पूर्वाह्णकाले ॥
इति कर्णाटबङ्गालः ॥ इति श्रीरागपरिवारः ।

24



ईशानास्याभिजातस्त्रिगतिगनिरिध: सत्रिपूर्णः सधीरो
रक्ताङ्गः कञ्जनेत्रः सिततरवसनः कण्ठमालादिकाढ्यः ।
पाणौ खड्गः प्रतापी स्मितवचनपरः स्निग्धगम्भीरनादः
संध्यायां राजमार्गे शरदि हयगती राजते शुद्धनाटः ॥

इति शुद्धनाटः ।

जाता श्रीरागमेले नवगिरिरचिता सादिमध्यान्तिकाया
श्रीखण्डापङ्कचोली कुसुमसुवसनं संदधाना मृगाक्षी ।
प्रौढेषद्व्यंग्यवाक्यैः प्रियमुपहसती मालवश्री सुतन्वी
चक्रीच्छेपावकर्पैश्चपलकरतलाद्भ्राम्यती सा सदैव ॥ ॥

इति मालश्री ।

गांधाराद्यन्तमध्या गुणगतिरिनिगा धैवतद्विर्गतिर्या
ताम्बूलास्यांजनाक्षी कनकमणिमयैर्भूषणैर्भूषिताङ्गी ।
नारायण्यंगलग्ना कुसुमसुकबरी कंचुकी चित्रवस्त्रा
देशाक्षी राजकन्या प्रतिदिनमुषसि प्रेक्षते मल्लयुद्धम् ॥

इति देशाक्षी ।

गौरी श्रीकोमलांगी कजमुकुलकुचा चित्रकूर्पासवस्त्रा
सर्वांगे भूषणाढ्या मृदुतरवचना शाकपूर्वा प्रगल्भा ।
वेलावल्येकमेलाधिकविधुगतिमा सत्रिका वा पहीना
देवक्री देवकन्या बहुचतुरतरा राजतेऽह्नोऽन्तयामे

॥ इति देवक्री ॥

मुग्धा गौरी विचित्राम्बररचिततनुः सर्वशृंगारयुक्ता
माद्यंतीशारिधा वा द्विगतिगतरिधा वह्निगत्यंतगा च ।
भूरेखाचापधर्त्री मृगशिशुनयना तीव्रनेत्रांतबाणा
भर्तुर्गेहे सखीभिः सहवरमधुमाधव्युपः संप्रयाति ॥

इति मधुमाधवी ।

चन्द्रद्विस्त्रिर्गताः स्युर्गरिनय इह तु स्निग्धनेत्रा प्रगल्भा
श्यामाभीरी त्रिषङ्गा मृदुवचनपरा मूर्ध्नि वेणीं दधाना ।

मृद्वंगी नीलवस्त्रा मृदुगलविलसद्विद्रुमालिश्च कर्णे
ताटंकाढ्या हि सायं रसपतिनिनदै रासदंडं रमन्ती ॥

इत्याभीरी ।

श्रीरागस्यैव मेलाद्रिधविधुगतिकः सादिमध्यांतकोऽसौ
श्यामांगः पीतवासा विरचिततिलकः कुंकुमैर्भालमध्ये ।
कण्ठे रत्नैकमालो ललितसुमुरलीवाद्यमानस्त्रिभंगी
शृङ्गारी भाति सायं कुसुमशरहितः श्रीजिजावंतरागः ॥

इति जिजावंतः ।

गौरस्तारुण्यपूर्णः करधृतकुलिशः संभृतानंगरूपः
कण्ठे मौक्तियमालः परिजनसहितः सर्वकिर्मीरवस्त्रः ।
शृङ्गाराढ्यः सुकामी मृदुवचनपरः षड्जमध्यादिकान्तः
प्रीतः केदारमेले द्विजपतिविरतौ भाति सालंगनाटः ॥

इति सालंगनाटः ।

शृङ्गारी पीतवस्त्रः कटकमुकुटसिंहासनच्छत्रयुक्तो
गौरांगः श्रीहुसेनी सुहृदभिमदकः पूर्ववागेश्वरीष्टः ।
त्रिस्त्रिर्द्व्येकस्थिताः स्युः स्वररिधगनयः केकिकण्ठाभकोऽसौ
न्यांचंतांशोऽरिधो वा विलसति दिवसांतेऽपि कर्णाटरागः ॥

इति कर्णाटरागः ।

कर्णाटस्यप्रमेलप्रकटितसुतनुस्त्वादिमध्यांतषड्जः
कण्ठे हारः सरलः सितवसनरुचिः पाटलोष्णीषधारी ।
गौरांगो रक्तनेत्रः सहचरबहुभिर्वीरिशृंगारवान्यः
छायानाटो दिनान्ते प्रहसति पथिकान् पुष्पसत्कंदुहस्तः ॥

इति छायानाटः ।

संपूर्णो द्विर्गती रिस्त्वनलगतिनिगः सग्रहन्यासकांशः
शृङ्गारी यौवनाढ्यः स्मितपरवदनः कंदुसद्दण्डहस्तः ।

गौरस्ताम्बूलवक्त्रः कुसुमशरसुहृद् रक्तवस्त्रः प्रतापी
चेतः सीमंतिनीनामनुसरति हमीरादिनाटो हि सायम् ॥
इति हमीरनाटः ॥ इति शुद्धनाटपरिवारः ।

मुग्धस्त्रीसंगतो द्विर्गतिरिगधनयः पूर्णसाद्यंतमध्यो
रुद्राणीवक्त्रजातः शिखिनकुलनटी नर्तको भूषणाढ्यः ।
श्यामांगः पीतवस्त्रः करधृतचपलाकांतिखड्गो दयावान्
प्रावृट्काले नृणां शं प्रकटयति सदा नट्टनारायणोऽयम् ॥
इति नट्टनारायणः ।

धित्तां धित्तां धितांतामिति मृदुमुरुजं वाद्यमाना सुतन्वी
शृंगाराढ्या सुगौरी कमलवसनकिर्मीरकूर्पासयुक्ता ।
प्रौढा बेलावली योषसि निजमधुमाधव्यशेषस्वरास्था
धाद्यंतांशारिधा वा सरपरदसुता सत्कुरायीसहाया ॥
इति बेलावली ।

काम्बोजी मोहिनी या द्विगतिगनिरिधा सत्रिकाढ्या निमा वा
गौरी ताम्बूलवक्त्रा कुसुमजवसनं कंचुकीं चादधाना ।
कस्तूरीबिन्दुभाला कनकमणिमयैर्भूषणैर्भूषितांगी
कर्णाद्यांघ्रिः सखीभ्यामुषसि विलसती किन्नरीवाद्यहस्ता ॥
इति काम्बोजी ।

धाद्यंतांशा सपा या नयनगुणगतिश्चात्र धांत्यौ रिगौ स्तः
कस्तूरीबिन्दुभाला मृगशिशुनयना चंद्रवक्त्रा सुतन्वी ।
सावेरी हारकण्ठा सुशबरवसना पीतकूर्पासयुक्ता
व्यष्टाढ्या श्यामवर्णा वरगजगमना सस्मिता सायमेति ॥
इति सावेरी ।

तन्वी श्यामा मृगाक्षी वरकमलमुखी पीतवस्त्रं दधाना
प्रौढा सन्मूर्ध्नि वेणीं द्विजवरगमना कंचुकीं कर्बुरां च ।

वक्त्रेषद्धास्ययुक्ता दशरसरचिता चामरैर्वीज्यमाना
सावेरीमेलयुक्ता ह्युषसि तु सुहवी सत्रिका पूर्णरूपा ॥
इति सुहवी ।

सावेरीमेलरक्ता स्वरसकलयुता सत्रिका स्वैरिणी या
चित्रं वस्त्रं दधाना कठिनकुचतटे कंचुकीं मेचकीं च ।
गौरांगी पंकजाक्षी हिमकरवदना दाडिमीबीजदन्ता
सायं शृंगारपूर्णा मदनसहचरी याति सौराष्ट्रिका सा ॥
इति सौराष्ट्री ।

सावेरीमेलजातः सपपरिरहितो धग्रहन्यासकांशः/
श्यामः पीताम्बरो यो मदनपरिजितः कण्ठमालादिकाढ्यः ।
विद्युन्मेघातिगर्जैरुदितशिखरिणान्नर्तयन्कीर्णपक्षान्
धारामीजन्ममित्रोप्युषसि मलहरो भाति मल्हाररागः ॥
इति मल्हारः ।

संस्थो मल्हारमेले स्वरसकलयुतो धैवतांशग्रहान्त्यः
श्यामांगः शंखमुक्तावलिरचितगलो भस्मभालः किरातः ।
रंभापत्रं च मौलौ धरति कटितटे बर्हिणां बर्हजालम्
भक्तः शम्भोः प्रभाते सुकरशरधनू राजते गौंडरागः
इति गौंडरागः ।

सव्ये दण्डं त्रिशूलं त्वपरकरतले शुभ्रवस्त्रं दधानो
भस्मांगो रक्तनेत्रो विमलसुजटिलो द्वीपिचर्मोपविष्टः ।
नासाग्रे त्यक्तदृष्टिर्गिरिशजपमना वेष्टितः शिष्यवर्गैः
केदारो वारिपोस्ति त्रिविधनिसुहवीमेलजातो निशीथे ॥
इति केदारः ।

गौरो रक्तांबरोऽसौ गुरुजलजवरश्रेणिकण्ठः सुरूपी
शृंगारी यक्षपंकैर्विरचितसुतनुर्भालभस्मैकमुद्रः ।

नृत्यारम्भप्रियो मुद्रितसुगमकवान् शंकराभूषणाख्यः
प्रातः साद्यंतमध्यः प्रचरति मधुमाधव्यशेषस्वरस्थः ॥
इति शंकराभरणः ।

गौरः सुश्वेतवस्त्रः सुरभितसुतनुर्हस्तताम्बूलधारी
कामी पुष्पेशधन्वा विरहिजनमनोवेधकः सत्रिकाढ्यः ।
चंपाजातीसुयूथीविरचितमुकुटः कण्ठमध्ये सुमालः
सायं केदारमेलेज उपविलसते यो विहादिर्गडः स्यात् ॥
॥ इति विहागडः ॥ इति नटनारायणपरिवारः ॥

अनंतरागाः संत्यन्ये नानादेशजनाश्रिताः ।
एतेषामुपरागाः स्युरूह्यंतां ते च तद्विदैः ॥
इति रागलक्ष्माणि ।

॥ इति रागमाला समाप्ता ॥ शुभं भवतु ॥